The elephant thinks that it has returned having entered (the pond) in some corner and having wetted the body with a few drops of water and also having drunk some water. But the plight of the pond is that its water is now muddy, the banks are damaged and the lotuses are destroyed. In short it has to be dug (i. e. constructed) again.

कासरे स्नात्वा निर्गतस्य गजस्य आशये इति आस्ते। वारणस्य हृदये इत्थं वर्तते। कथमित्याह—क्वापि कोणे अवतीर्य, अभितः गात्रं पयःशीकरैः सिक्त्वा, उदकमास्वाद्य आगतोऽस्मि इति। गजः किलैवं चिन्तयति "अहं कासारस्य बाधा यथा न स्यात तथा क्वापि कोणे अवातरम्। कैश्चित् जलबिन्दुभिः गात्रमसिञ्चम्। किञ्चिदुदकमास्वाद्य आगतोऽस्मि च" इति। परन्तु कासारस्य दशा अवस्था असौ वर्तते। का? अम्भांसि कलुषितानि। महतो गजस्य प्रवेशेन सर्वं जलमाविलं संजातम्। भग्नास्तटाः। कूलानि नष्टप्रायाणि। नलिनी प्रध्वस्ता। पद्मानां लताः उन्मूलिताः। किं बहुना? अधिकेन वचसा किं प्रयोजनम्? संक्षेपेण वक्तव्यं चेत् तत्सरः पुनः खातव्यमास्ते। पुनरेव खननादारभ्य सर्वं

निर्माणीयमस्ति। नष्टप्राय एव जातः कासार इति भावः।

एवं गजकासारावपदिश्य राजजनपदावुद्दिशति कविः। राजा कश्चन ग्रामं प्रविशति चेत् तत्र सत्कारं लभते। ततो निर्गमनवेलायां स भावयति—मया अल्पपरिवारेण तत्र गतम्। तत्रत्येन आहारादिना तृप्तिर्लब्धा। ततोऽहं निवृत्तः इति। ग्रामस्य तु दुरवस्था अवर्णनीया भवति। सेनादीनां संमर्देन गृहाणि ध्वस्तानि, समाजः कलुषितः अभवत्, स्थिता आहारसामग्री भुक्तकल्पा च।

उपदेशस्तु महतां स्वैः क्रियमाणायाः हानेः ज्ञानं न विद्यते। तत्र जाता हानिः तटस्थैः सम्यग् दृश्यते इति।

२०

अथ विश्वस्य निर्मातारं धातारमपदिश्याह—

द्यौरित्थं क्षितिरित्थमित्थमुदधेमुर्द्रेति कृत्वा स्थितिं
विश्वस्याहनि विश्रमाय शयितुं प्रारम्भि धात्रा यदा।
दग्धं चण्डकरैस्तदैव पवनैरौत्पातिकैः शोषितं
मेघैः प्लावितमद्भुतैरपि जगत्स्रष्टव्यमासीत् पुनः॥

"Let the sky be thus, the earth thus and the limit of the ocean thus;" in this manner the creator arranged the order of the universe and began lo take a nap. Immediately the whole universe was burnt down by the suns (with furi-

ous rays), was dececated by the winds of final destruction and was tossed by (the waters of ) fantastic clouds. The result was that the universe) had to be created again

त्रिभुवनविधाता विश्वं निर्मितवान् । द्यौः गगनं भवतु इत्थं, क्षितिर्भूमिः इत्थ भवतु उदधेः मुद्रा सीमा इत्थं भवतु इति सः विश्वस्य स्थितिं चकार । अहनि दिवसे एवं कृत्वा ततो विश्रमाय शयितुं स ऐच्छत् । यदा धात्रा शयितुं प्रारम्भि,तदैव चण्डकरैः सूर्यैः तद्विश्वं दग्धम् । औत्पातिकैः नाम प्रलयकालिकैः पवनैः तद्विश्वं शोषितम् । अद्भुतैः मेघैः प्लावितम् । महाकारैः जलदैः वर्षणेन प्लवनविषयीकृतम् । अन्ततः किं जातम्? पुनः स्रष्टव्यमासीत् । तथा च धातुः सकलं कार्यं विफलमभवदित्यर्थः ।

एवं धातारमपदिश्य विफलयत्नं कमप्युद्दिशति कविः । दीर्घेण प्रयत्नेन भूमिं कर्षित्वा, जलं प्रापय्य सस्यानि रोहयति कर्षकः । यावता कालेन स किञ्चिद् विश्राम्यति, तावता वह्निना वा चण्डमारुतेन वा अतिवृष्ट्या वा सर्वं क्षेत्रं विनाशितम् । अहो । सर्वं क्षेत्रं पुनः कार्यतामापतितमिति ।

उपदेशस्तु दैवे विरुद्धे कृतमपि अकृतवद् भवतीति ।

अथ वसन्ते पुष्प्यन्तं धुस्तूरमपदिश्याह—

स्वस्ति स्वागतमास्यतां सुखममी जाताः कुतः पल्लवाः
सन्तः ? सत्कुसुमान्यपीह किमतो माध्वी च तत्रेक्ष्यते ? ।
किं भृङ्गा अपि सन्ति ? साधु शिरसि न्यस्तं पदं शाखिनां ?
धुस्तूरास्ति न दुर्लभं किमपि ते यावद्वसन्तः सुखी ॥

Adieu! Welcome to thee! Please be seated comfortably. Well, whence did these fine leaves spring up? Here are good flowers too! What, there is honey as well. Oh, are there also the bees? Good! You have beaten all the trees (lit: you have kept your foot on the heads of all trees.) Oh, Dhustura, as long as the spring is happy, nothing is unobtainable for you.

हे धुस्तूर, (धुस्तूराख्य वृक्ष !) स्वस्ति ते । स्वागतं च । सुखं यथा तथा आस्यताम् । सुखासने त्वयोपविश्यताम् । अमी सन्तः पल्लवाः कुतो जाताः ? नवीनानि किसलयानि यानि पश्यामः, तानि अदृष्टपूर्वाणि कथमुद्भूतानि ? सत्कुसुमान्यपीह सन्ति । सुन्दराणि पुष्पाणि च त्वयि शोभन्ते । किमतो माध्वी च तत्रेक्ष्यते ?

तेषु कुसुमेषु मधु च दृश्यते किम्? किं भृङ्गा अपि सन्ति? तन्मधु पिपासवो भ्रमरा अपि त्वत्सविधे सन्ति किम्? साधु। सम्यक्। शाखिनां शिरसि पदं न्यस्तम्। शाखा आसां सन्तीति शाखिनः। वृक्षा इति यावत्। सर्वेषां वृक्षाणां शिरसि पदन्यासेन त्वया वृक्षसमूहे सर्वोत्कर्षेण भूयते। किमपि ते दुर्लभं नास्ति। कियदवधीत्याह—
यावद् वसन्तः सुखी तावत्। वसन्तो यावद् विजृम्भते, तावत् त्वयि सर्वमपि शोभते एव इत्यर्थः।

एवं धत्तूरमपदिश्य कविः कतिपयग्रामेशं कमपि राजाधममुद्दिशति। अङ्गुलिगण्यानां ग्रामाणामधिपत्वेऽपि तव छत्रचामरादिरलङ्कारोऽस्ति। सौधाः, दुर्गाः कोशाश्च वर्तन्ते। कोशे धनमपि विद्यते। तद्धनं जिघृक्षवः गानपरा विद्वांसोऽपि त्वां प्राप्ताः। अहो! राजाधिराज इव शोभसे। सर्वे पुरातनाः त्वया जिताः। यावद् विधिरनुकूलः, तावदधमस्यापि तव दुर्लभं किमपि नास्तीति।

उपदेशस्तु लोके अनुत्तमा अपि शोभने काले सर्वां सम्पदमश्नन्तीति।

अथ सदा मर्यादारक्षक इति जनविश्वासपात्रं समुद्र-मपदिश्याह—

दृष्टाश्चन्द्रसमुद्गमाः शतमतिक्रान्ताः शतं प्रावृषः
सीमामेष न जात्वलङ्घत किलेत्यब्धिर्न विश्वस्यताम् ।
योऽसौ शेत इवायमेव विधिना वामेन चेच्चाल्यते
का सीमेति तदास्ति? के जनपदाः? का मेदिनी? का दिशः ?

We observed a hundred moonrises. A hundred rainy seasons too elapsed. This (Ocean) never transgressed his limits. Thinking thus, let not this ocean be believed. If this ocean, who seems to be sleeping, is disturbed by the unfriendly fate, what will be the limit? Which will be the country? Where will be the earth? Which also will be the directions?

चन्द्रसमुद्गमाः चन्द्रोदयाः शतं दृष्टाः । अस्माकं वयसि चन्द्रस्य पूर्णतया उद्गमाः शतं वीक्षिताः । राका प्रतिमासमेका भवति । तस्यां पूर्णः चन्द्र उद्गच्छति । पूर्णे चन्द्रे उद्गच्छति सति समुद्रो वर्धते । एषा घटना शतवारं वीक्षिता । तथैव शतं प्रावृषः अतिक्रान्ताः ।

प्रावृण्नाम वर्षर्तुः। प्रावृषि महती वृष्टिर्भवति। एषापि समुद्रस्य वृद्धेः हेतुः। तादृश्यः प्रावृषः शतसंख्याकाः अतिक्रान्ताः। तथापि एषः अब्धिः सीमां जातु न अलङ्घत। कदाचिदपि वेलामतिक्रम्यासौ समुद्रः न प्रावर्तत। विकारहेतौ सत्यप्यसौ न व्यक्रियत। एवं चिन्तयित्वा एषोऽब्धिः न विश्वस्यताम्। सार्वदिकमस्य मर्यादारक्षणमिति विश्वासो न क्रियताम्। कुत इत्याह– योऽसावब्धिः शेत इव दृश्यते, अयमेव वामेन विधिना चाल्यते चेत्, विरुद्धेन अदृष्टेन कम्प्यते चेत्, तदा सीमेति का अस्ति? न कापि। के जनपदाः? जनानामास्पदीभूता देशाः के? न केऽपि। का दिशः? इयं प्राची, इयं प्रतीची इति व्यवस्थापि का वर्तेत? न कापि।

एवं समुद्रमपदिश्य 'दृढ' इति जनैर्भाव्यमानं कमपि पुरुषमुद्दिशति कविः। साधारणोत्पातेषु गतेषु महापुरुषोऽसौ क्रोधभयादिभिः न विचलित इत्येतावन्मात्रेण तस्य धैर्यं सार्वकालिकमिति न मन्तव्यम्। विधिः यावदनुकूलः तावत् सः स्थिरः भवेत्। विधौ विरुद्धे न सोऽपि धीरतां रक्षेद् इति।

उपदेशस्तु लोके दृश्यमानं सर्वं स्थैर्यं सापेक्षमेव। न तु आत्यन्तिकम्। परमार्थतस्तु न किमपि नित्यम्। विधेः क्रीडनकेषु कथङ्कारं गुणा नित्या भवेयुः? इति।

अथ प्रणयकोपेन प्रियपराङ्मुखीं चक्रवाकीमपदिश्य वदति—

आयुस्ते कियदस्ति ? तत्र च कियत्तारुण्यमत्रापि ख—
ल्वर्धं निर्गलितं निशात्मकतया यत्रास्ति सङ्गो न ते।
शेषाः सन्ति कति क्षणाः ? प्रणयजस्तत्रापि कोपो यदि
व्यर्थं निश्चिनु चक्रवाकि ! जननं कस्ते हितं वक्ष्यति ?

O, Chakravaki* ! How long is your life-span ? In that (life), how much is youth ? Even in that (youth) one half is lost as night when you can have no meeting (with your spouse) So, how many moments are left ? If even those very few moments are (spent in ) coquettish anger, you may conclude that your birth is in vain. Well, (I dont know) who will advise you.

(*A female ruddy goose that is supposed to be separated from its lover during nights)

हे चक्रवाकि, तव आयुः कियदस्ति ? अतीव ह्रस्वं तव आयुः। तत्र च कियत् तारुण्यम् ? नूनं ह्रस्वतरमेव। अत्रापि तारुण्ये अर्धं निशात्मकतया निर्गलितम्। कुत इत्याह—यत्र ते सङ्गो नास्ति। निशान्धतया चक्रवाक-

पक्षिणः रात्रिषु किमपि न पश्यन्ति। का कथा प्रियसङ्गस्य? एवं च प्रियसङ्गयोग्याः शेषाः क्षणाः कति सन्ति? सर्वथा अल्पा एव ते। तत्रापि ह्रसिष्ठे काले यदि प्रणयजः कोपः, तर्हि ते जननं व्यर्थं निश्चिनु। प्रियसङ्गमस्य सर्वथा अलाभात् व्यर्थं त्वज्जन्म अवधारय। कः ते हितं वक्ष्यति? को वा त्वां प्रणयकोपपरित्यागरूपं हितमुपदिशति? न जानामि।

एवं चक्रवाकीमपदिश्य काञ्चन नायिकामुद्दिशति नीलकण्ठः। आयुषि अल्पे, कतिपयदिनस्थायिनि तरुणिम्नि, बहुविघ्ने प्रियसंगमे च सति, चतुरया स्त्रिया प्रणयकोपमाश्रित्य सुखं न नाशनीयम्। अत्यल्पः किल तादृशोऽवकाशः। तथा काचित् करोति चेत् तस्याः जन्म व्यर्थमेवेति।

उपदेशस्तु सर्वेषां प्राणिनामायुः अल्पम्। तत्रापि मानवानाम्। तस्मिन्नायुषि अर्धं निशात्मकतया व्यत्येति। बालत्ववृद्धत्वयोः महान् कालो व्यर्थो भवति। किमपि साधयितुं युक्तः कालः तरुणिमा। स च न दीर्घः। तत्र सिषाधयिषितं साधनीयम्। यदि तदापि केनापि क्षुद्रेण कारणेन साध्यं परित्यज्यते, जन्मैव व्यर्थं भवेद्—इति।

अथ चकोरमपदिश्याह—

सर्वेषां विदिताः सुधाकरकराः साक्षात्सुधारूपिणः
सन्देहोऽपि न, तद्भुजः सुमनसो जाता अमर्त्या इति ।
तानेव ह्युपभुञ्जते प्रतिनिशं दीनाश्चकोरा इमे
क्षीयन्ते तृणवच्च को नु गहनां जानातु धातुर्गतिम् ॥

It is well known that the moon's rays are (nothing but) the ambrosia it self. There is also no doubt (about the fact that) the Gods who consume them are immortal. The poor chakora birds consume the same (rays) every night.

(Nonetheless,) they diminish (continuously) like (dry) grass. Who can comprehend the mysterious ways of fate (or the creator)?

सुधा अमृतमस्य करेषु किरणेषु वर्तत इति सुधाकरश्चन्द्रः । तस्य चन्द्रस्य कराः किरणाः साक्षात् सुधारूपिणः इति सर्वेषां लोकानां विदिता एव । सर्वे जनाः विषयमिमं जानन्त्येव । तद्भुजः अमृताहाराः सुमनसो देवाः । ते अमृतभोजनेन अमर्त्या मरणरहिताः जाताः इति विषयेऽपि न सन्देहः । दीना इमे चकोराः प्रति-

निशं तानेव चन्द्रकरान् उपभुञ्जते। तथापि प्रतिदिनं तृणवत् क्षीयन्ते। यथा शुष्कं तृणं प्रत्यहं क्षीयते, तथैव इमे कृपणाः चकोराः क्षीणा भवन्ति। गहनामविज्ञेयां धातुर्गतिं प्रपञ्चस्य निर्मातुः नियमं को जानातु? न कोऽपि। अन्यथा समाने निमित्ते कुतोऽयं फलभेद इति कश्चिद् वर्णयेद् इत्यर्थः।

एवं चकोरमपदिश्य विद्यामुपार्ज्यापि जीविकामलभमानं कञ्चन दुरदृष्टमुद्दिशति कविः। यां विद्यामर्जयित्वा सुमनसः (पण्डिताः) धनिका अभूवन्, तामेव अभ्यस्यापि विमुखविधिः दरिद्रो दरिद्रतरो भवति। इमां धातुर्लीलां को जानीयाद्—इति।

अथवा यं राजानं सेवित्वा पण्डिताः सर्वविधभोग-भाग्यवन्तोऽभूवन्, तस्यैव राज्ञः सेवां कृत्वापि किमपि फलमलभमानं कमपि उद्दिशति। कदाचिदपि राजानं स्तुत्वा केऽपि भाग्यानि लभन्ते, प्रतिदिनं तस्यैव सेवां कृत्वापि कश्चित् फलं न लभते—इति।

उपदेशस्तु समानेऽपि कारणकलापे कर्तुः अदृष्टमनुसृत्य फलं जायते। तद्रहस्यं वेत्तुं वयं न शक्नुमः—इति।

अथ गणाधिपादीनां वाहनभूतान् मूषकादीनपदिश्याह–

अर्चामः सततं गणाधिपमथाप्याखून्निहन्मः शतं
ध्यायामो हृदि भैरवं तदपि तु प्रोत्सारयामः शुनः ।
भूतेशं प्रणुमः, तथापि शतशो भूतान् निगृह्णीमहे
न ह्येकस्य गुणः परस्य महतो दोषानपि प्रोर्णुते ॥

We worship Lord Ganesa (whose vehicle is a mouse) incessantly, but kill hundreds of mice. With all the heart, we contemplate upon Lord Bhairava (who is accompanied by dogs), but expel the dogs (mercilessly). We bow to (Lord Shiva, who is) the master of ghosts, but suppress innumerable ghosts. (So, the conclusion is that) the merit of one (member of a species) can not conceal (or nullify) the large blemishes of any other (member of that species).

वयं सततं गणाधिपमर्चामः । अनवरतं देवं मूषकवाहनं पूजयामः । अथापि शतमाखून् निहन्मः । असंख्यातान् मूषकान् संहरामः । गणाधिपवाहनस्य इमे बन्धव इति नैव त्यजामः । हृदि भैरवं ध्यायामः । श्वभिः अनुगतं भैरवं मनसा ध्यायामः । तथापि शुनः प्रोत्सारयामः । दण्डादिभिराहत्य निष्कासयामः ।

भूतेशं प्रणुमः । भूतानामीश्वरं शिवं प्रणमामः । शतशो भूतान् निगृह्णीमहे । मन्त्रतन्त्रादिभिः भूतप्रेतपिशाचादीन् निग्रहविषयीकुर्मः । एवं च किं ज्ञायत इति चेत्—एकस्य गुणः परस्य महतो दोषान् न प्रोर्णुते हि—इति । एकस्यां जातौ जातः कश्चित् गुणिष्ठ एव कुतो न स्यात्, तज्जातीयाः अन्ये दोषिणश्चेत्, तेषां दोषाः महान्तः गुणिनः एकस्य गुणैः न आच्छाद्यन्ते, इति ।

एवं मूषकादीनामपदेशेन उत्तमकुले जनित्वापि दण्डभाजः उद्दिशति । कुले कश्चित् महान् पुरा जातः, राजादिपूजाभाजनं च संजात इत्येतावन्मात्रेण तत्कुलजाः सर्वे न तथा भवन्ति । तेषु यदि दोषाः सन्ति, ते दण्डभाजनं भवन्त्येव इति ।

उपदेशस्तु कविना चरमे चरणे साक्षादुक्तः । अत्र च अर्थान्तरन्यासाप्रस्तुतप्रशंसयोः सङ्करः ।

२७

अथ कल्लोलमालाभिर्विजृम्भमाणं जलधिमपदिश्याह—

अन्तः क्षोभकृतः कतीह तिमयः कत्युच्छ्रिताः पर्वताः ?
कीदृक् चान्तरबिन्धनो हुतवहः ? कीदृक् च नौकागतिः ?
आगच्छत्प्रतिगच्छदुच्चलदुपश्लिष्यत्प्रधावत्पतत्-
कल्लोलारभटीभिरेव जलधेः सर्वं तदाच्छाद्यते ॥

How many are the whales ( or the big fish) that cause violent turbulence inside (the ocean) ? How many also are the lofty mountains ( inside the ocean)? Of what nature is the submarine fire which has water itself as fuel ? Of what proportion is also the movement of ships ? In the ocean, all this is covered which keep (continuously) coming, returning, spurting, embrasing, running and falling.

इह समुद्रे अन्तःक्षोभकृतः तिमयः कति ? संक्षोभं विदधानानां महामत्स्यानां संख्या का ? उच्छ्रिताः पर्वताः कति ? उन्नताः शैलाः कति च अन्तः सन्ति ? अन्तर्विद्यमानः अबिन्धनो हुतवहः कीदृक् ? आपो जलानि इन्धनं यस्य, सः वह्निः कीदृशः ? प्रयान्तीनां नौकानां गतिः कीदृक् ? एवं च असंख्यातास्तिमयस्सन्ति, महान्तः पर्वता वर्तन्ते, अन्तरौर्वाग्निर्भयंकरो विद्यते, नौकानां गमनं च क्षोभजनकं भवत्येव । तथापि तत् सर्वं जलधेः कल्लोलारभटीभिरेव आच्छाद्यते । तरङ्गाणां नृत्यमेव समस्तमुपर्युक्तमाच्छादयतीत्यर्थः । कीदृशाः कल्लोला इत्याह—

आगच्छदिति । ये कल्लोलाः महातरङ्गाः सततया आगच्छन्तः, प्रतिगच्छन्तः, उच्चलन्तः, उपश्लिष्यन्तः,

प्रधावन्तः पतन्तश्च सन्ति, ते इत्यर्थः। एवं च तरङ्गनाट्यवैभवेन जलधेः वास्तवान्यपि कष्टानि निगूह्यन्त इत्यर्थः।

एवं जलधिमपदिश्य अनेकानि कष्टानि आन्तराणि अनुभूयापि तानि अप्रदर्शयन्तं सत्पुरुषमुद्दिशति। तस्य हि सांसारिकाः क्लेशा भूयांसः सन्ति। महान्ति ऋणानि विद्यन्ते। आमयादिबाधाः असंख्याः। आगच्छतामतिथीनां सत्कारभारो महीयान्। तथापि तत्तत्प्रसङ्गानुसारेण तेनोच्चर्यमाणेषु वचनेषु सर्वं तद् आच्छाद्यते, न किमपि प्रकटीभवति।

उपदेशस्तु महान्तः स्वीयान् सर्वान् क्लेशान् अन्तरेव नियच्छन्ति, सदा प्रसन्ना एव दृश्यन्ते इति।

२८

अथ युक्त्यन्तरेण समुद्रमेवापदिश्याह—

जामाता कमलाक्ष एव गृहिणी गङ्गा जगत्पावनी
शीतांशुप्रमुखाः सुता भगवती श्रीरेव कन्या स्वयम्।
ईदृक् ते गृहमेधिता त्रिभुवनाधारस्य वारांनिधे
कः शक्नोति जनो मनोरथपथेऽप्येतावदुत्प्रेक्षितुम्॥

O, ocean, the lotus eyed (Vishnu) is your son-in-law. The Ganga, who

is the purifier of the world, is your wife. The moon etc. are your sons. The godess of wealth herself is your daughter. You, being the supporter of the three worlds, have a family of this sort. Who (else) can imagine so much even in aspirations ?

हे वारांनिधे, कमलाक्ष एव जामाता । तव साक्षाद् विष्णुरेव जामाता अस्ति । जगत्पावनी गङ्गा गृहीणी । सर्वेषां लोकानां पापानि या क्षालयति सा जाह्नवी तव पत्नी । समुद्रस्य सरित्पतित्वादित्यर्थः । शीतांशुप्रमुखाः सुताः । शीता अंशवः किरणा यस्य सः, शीतांशुः चन्द्रः । स एव प्रमुखः समुद्रस्य सुतेषु । भगवती श्रीरेव स्वयं कन्या । जगन्माता लक्ष्मीरेव तव कन्या । ईदृक् ते गृहमेधिता । तव गार्हस्थ्यमेतादृशम् । कस्य तव ? त्रिभुवनाधारस्य । साक्षात् त्वं त्रयाणां भुवनानामाधारो-ऽसि । अतः तव गृहे तादृशी गृहिणी, तादृशाः सुताः, तादृशी दुहिता, तादृशो जामाता च वर्तन्ते । को जनो मनोरथपथेऽपि एतावदुत्प्रेक्षितुं शक्नोति ? अन्यः को वा अनियन्त्रणानां मनोरथानां मार्गेऽपि एतावन्तं सम्पदतिशयं शक्नोति उत्प्रेक्षितुम् ? न कश्चित् । एवं च अन्यै-र्मनसाप्यलभ्यं भाग्यविशेषं लब्धवान् भवानेव धन्यः ।

एवं समुद्रमपदिश्य सर्वसौभाग्यशालिनं कमपि श्रीमन्तमुद्दिशति । स स्वयं बहूनामाधारः । गुणवन्तः सुताः । भाग्यवती सुता । जगद्वन्द्यो जामाता । एतादृशं गार्हस्थ्यं पुण्यविहीनः कथमिव कल्पनायामपि लभेत इति ।

उपदेशस्तु महतां धन्यानां गार्हस्थ्यं सकलसम्पत्कारणम् । नैतदल्पपुण्यलभ्यम् — इति ।

२९

अथ वटाश्वत्थवृक्षावपदिश्य वदति—

यन्मूले निखिलागमानुपदिशत् तत्त्वं परं शाङ्करं
यत्पर्णे जगतां निधिः स तु वटो नाम्नापि न स्वीकृतः ।
यच्छाखानिलयः पिशाचनिचयो यन्मूलगाः पन्नगाः
तस्याश्वत्थतरोः पुनः कति नमस्काराः कति प्रार्थनाः ॥

The banyan tree, under which sits the pre-eminent principle of Shankara (i.e. Dakshinamurthy) teaching all the Vedas, and on whose leaf (sleeps) the treasure of all the worlds (i.e. Lord Krishna), is not even mentioned by name. But, in the case of the peepal tree, whose branches are the abode of many ghosts and whose trunk is (the dwelling of) snakes, countless are the prostrations and prayers.

यस्य वटवृक्षस्य मूले निखिलागमान् समस्तवेदादि-शास्त्राणि उपदिशत् परं शाङ्करं तत्त्वमस्ति, दक्षिणामूर्तिरूपं, यस्य च पर्णे जगतां निधिः अस्ति बालकृष्णः, सः वटः नाम्नापि न स्वीकृतः। जनैः नाम्नापि वटस्य उल्लेखो न क्रियते। एतद्वैपरीत्येन यस्याश्वत्थस्य शाखाः पिशाच-निचयानां भूतव्रातानां निलयः, यस्य मूले च पन्नगाः सर्पाः निवसन्ति, तस्य कति नमस्काराः, कति च प्रार्थनाः। जनाः प्रतिदिनं गत्वा अश्वत्थतरवे प्रदक्षिणनमस्कारान् अर्प-यन्ति। 'मम पुत्रो जायताम्' इत्यादि प्रार्थनाश्च कुर्वन्ति।

एवं वटाश्वत्थावपदिश्य वेदवेदाङ्गपारङ्गतं दैवभक्तं केवलमन्त्रतन्त्रज्ञमनाचरं चोद्दिशति कविः। यः वेदा-गमादीनि शास्त्राणि सम्यगधीतवान्, देवान् सदा पूजयति उपशान्तश्च, तस्य गणना केनापि न क्रियते। यस्तु विद्याशून्योऽपि अनाचारोऽपि दुष्टानामाश्रयः, भूतप्रेताद्या-राधकश्च, तस्य गृहान् सततं प्रायन्ति प्रजाः, तं प्रणमन्ति, तमेव प्रार्थयन्ते। इति।

उपदेशस्तु गतानुगतिको लोकः परमार्थं न चिन्तयति। को नमस्कारार्ह इति लोकस्य ज्ञानं नास्तीति।

अथ परिश्रम्यापि तत्फलमभुञ्जानाः सरघाः अपदिश्याह—

आगच्छन्त्यवगुण्ठयन्त्यथ पुनः पश्यन्ति जिघ्रन्ति च
स्वारब्धं मधु मक्षिका न कणमप्यस्य स्वयं भुञ्जते ।
धन्यस्त्वन्य उपेत्य निर्दयममूरुत्सारयन् दूरतः
स्वादं स्वादमिदं स्वसम्भृतमिव स्वच्छन्दमानन्दति ॥

The honey bees come and encircle (their hive). Then again and again they look at and smell the honey they have prepared. But, they don't eat even a bit of that honey. Some other lucky fellow comes there, disperses them ruthlessly and enjoys the honey to his full satisfaction as though he had himself collected it.

मधुमक्षिकाः आगच्छन्ति । पुष्पात् पुष्पं गत्वानेषु च भ्रमित्वा स्वगृहं मधुकोशं प्रत्यागच्छन्ति । तं च मधुकोशमवगुण्ठयन्ति । परितः सततभ्रमणेन अवगुण्ठनसहितमिव कुर्वन्ति । अथ पुनः स्वारब्धं मधु पश्यन्ति जिघ्रन्ति च । स्वेन सञ्चितं मधु मुहुर्मुहुः अवलोकयन्ति तद्गन्धं च घ्राणेन उपाददते । परन्तु अस्य कणमपि

स्वयं न भुञ्जते । मधुनः अणुमपि न भक्षयन्ति । यदा वसन्तः तिरोभवति, तदा पुष्पाणामभावात् आहारो न लभ्यते, तदा एतन्मधु पास्यामः-इत्याशया रक्षन्ति ।

धन्यस्तु अन्यः कोऽपि मनुष्यः उपेत्य अमूः मधुमक्षिकाः दूरतः निर्दयम् उत्सारयन् इदं मधु स्वसम्भृतमिव स्वच्छन्दं स्वादं स्वादमानन्दति । स्वेनैव सम्पादितमिव निश्शङ्कं स्वादित्वा स्वादित्वा मोदते । इमा मक्षिकाः इदं मधु संचितवत्य इति तस्य तासु क्वापि दया नास्ति । धूमादिप्रयोगेण ताः सुदूरं निस्सारयति । अत एव निश्शङ्को भूत्वा मधु पिबतीत्यर्थः ।

एवं मधुमक्षिकाः अपदिशन् स्वेन सम्पादितं धनमभुञ्जानं कृपणमुद्दिशति । स हि धनकोशं प्रत्यागच्छति, कोऽपि पश्येद् इति भीत्या अवगुण्ठनं करोति, धनकोशस्य द्वारमुद्घाट्य धनं पुनः पुनः चक्षुषी विकास्य वीक्षते, तत्स्पृष्ट्वा घ्रात्वा चानन्दति । किन्तु धनस्य लेशमपि न भुङ्क्ते । पुण्यवान् कश्चित् कदापि तत्रागत्य तं कृपणं वित्तस्वामिनं निष्करुणं निष्कास्य तद् धनं स्वार्जितमिव ससन्तोषं स्वेच्छया मोदं मोदं भुङ्क्ते ।

उपदेशस्तु आर्जितं धनं शीघ्रमेव भोक्तव्यम् । यदि मोहेन धनं रक्ष्यते, तदन्यो भोक्ष्यते । तस्माद् धने मोहः कृपणता च न साम्प्रतम्-इति ॥

अथ वसन्तवैभववार्तामपदिश्याह—

आसन्नो मधुरागतं वनभुवः साम्राज्यमित्यद्भुताः
श्रूयन्ते गिर एव तत्त्वमिह तु ज्ञातुं विधातुः क्षमम्।
यत्पर्णैस्त्रुटितं यदप्युपरतं पुष्पोद्गमैः शाखिनां
यद्ग्लानं विटपैरिदं पुनरिह प्रत्यक्षमालक्ष्यते ॥

"The spring has arrived, the hegemony of the floral lands has come"—such glorious words alone are heard. But, it is quite possible to know the reality. What we actually perceive is that the leaves have fallen (from the trees), the blooming of flowers has ceased in the trees and that the trees are withering.

अद्भुताः गिरः श्रूयन्ते। काः ताः गिरः? आसन्नो मधुः इति। पुष्पसमयो वसन्तः आयात इति। अपि च वनभुवः साम्राज्यमागतम् इति। विविधवृक्षसम्पन्नायाः काननभूमेः राज्यं प्राप्तम् - इति। परं तु इह विधातुः तत्त्वं ज्ञातुं क्षमम्। प्रवर्तमानास्वपि तादृशीषु वाक्षु वस्तुतत्त्वं किमिति ज्ञातुं न कष्टम्। कथमित्याह—इह प्रत्यक्षमालोक्यते; साक्षाद् दृश्यते किल काननभूमौ, किम्,

यत्पर्णैस्त्रुटितम् । वृक्षेभ्यः पर्णानि निपतितानि, सूर्यातपस्य विजृम्भणमसहमानानि । पुनश्च किमालोक्यते । यदपि शाखिनां पुष्पोद्गमैः उपरतम् । वृक्षाणां कुसुमविकसनानि विरतानि पूर्णतया । अपि च यद् विटपिभिः ग्लानम् । विटपाः शाखाः आसां सन्तीति विटपिनः । ते विटपिनो वृक्षाः ग्लानाः जलाभावाद् आतपाधिक्याच्च । एतदेवेह प्रत्यक्षं दृश्यते । अद्भुतगिरां श्रवणं कथाप्रायमित्यर्थः ।

एवं वसन्तवार्तामपदिश्य नूतनस्य प्रभुत्वस्य स्थितिमुद्दिशति । नूतनो राजा आगत इति, प्रजानां सौख्यसाम्राज्यमेव आयातमिति रम्या वाचः श्रूयन्ते । परं तु तत्र किं पश्यामः? जनानां श्रियः त्रुटिताः, उत्सवाः न वर्तन्ते, सर्वेऽपि श्रान्ताश्च । नवस्य राज्ञो भयात्, तद्विहितकराणां भाराद्वा ।

उपदेशस्तु "यावत् श्रूयते, तावत् क्वापि वस्तुतो न भवति । बहुत्र श्रुतस्य विपरीतमेव दृष्टिपथमायास्यति । अतो वाचि अतिविश्वासो न कर्तव्यः" इति ॥

अथ पान्थानपदिश्याह—

उत्सन्नो मधुरस्ति, कोकिलरवैरुत्सन्नमस्त्येतद-

प्युत्सन्नं मलयानिलैरिदमपि प्रागेव जानीमहे ।

पान्थाः ! तुष्यथ तावतैव किमिति भ्रान्ता यदि प्राणिति

स्तोकेनापि मनोभवो गलतु वः प्राणेषु शुष्को ग्रहः ॥

It is (a fact that) the spring is over. It is also (true that) the sounds of cuckoos have ceased. We also know that the winds (blowing from the direction) of the Malaya mountain, have disappeared. Travellers, why are you exhilarated under delusions? If the cupid is alive even a little, the vain attachment in your lives may safely be given up.

मधुः उत्सन्नः । वसन्तर्तुः अवसितः । अस्ति, एतत् तथैव भवति । कोकिलरवैः उत्सन्नम् । पिकानां मधुरा आलापाः नष्टाः । एतदपि अस्ति । सत्यमेव इदमपि । मलयानिलैः उत्सन्नम् । मलयशैलाद् आयातानां पवनानां कथापि गता । इदमपि प्रागेव जानीमहे । एवं च त्रय एते वसन्तकोकिलमलयानिलाः विरहताप-वर्धकत्वेन प्रसिद्धा न सन्तीति सत्यमेव ।

हे पान्थाः ! तावतैव भ्रान्ताः किमिति तुष्यथ ? तावन्मात्रेण " इतः परमस्माकं प्राणभीतिर्नास्ति । अस्मच्छत्रवः सर्वे अदृश्यतां याताः " इति भ्रान्त्या कुतो हृष्यथ यूयम् । अनुचितोऽयं तोष । कुत इति चेत्-यदि मनोभवः स्तोकेनापि प्राणिति, प्राणेषु वः शुष्को ग्रहो गलतु । मन्मथस्य अंशोऽपि यदि हृदये अवशिष्टः, स एव भवतां प्राणान् हरिष्यति, अपहायोऽपि मन्मथो विरहिमथने समर्थ एव । तस्मात् प्राणेषु युष्माकं योऽसौ निरर्थको ग्रहः, निष्फलोऽभिषङ्ग अस्ति, स सर्वथा दूरीकरणीयः ।

एवं प्रोषितान् पान्थान् अपदिश्य संसारपान्थानुद्दिशति । अयि भोः, यौवनं गतं, घनाशा गता, विषममार्गदेशिकाः अवसन्नाः, इतः परं मम आत्मनीने पथि चरतः कापि हानिर्न भविष्यति-इति नैवालोचनीयम् । यदि मनोभवस्य वासनापि अवशिष्येत, तर्हि सर्वं साधनं निष्फलं स्यादिति ।

उपदेशस्तु सर्वस्य कार्यस्य मुख्ये कारणे स्थिते सहकारिमात्रापगमेन तत्कार्यसम्भवो नास्तीति न मन्तव्यं मनीषिभिः इति ।

३३

अथ आमूलाग्रं तिक्तं निम्बमपदिश्याह —

तिक्तास्ते विटपास्त्वचो यदि ततस्तिक्तास्ततोऽपि च्छदाः
तेभ्योऽपि प्रसवास्ततोऽपि च फलान्येवं न दृष्टं क्वचित् ।

स्तौमि त्वामथ वा न निम्ब भवतोऽप्यासीद्यतः सम्भवः
श्रीमत्तत् किल निम्बबीजमवनौ स्तुत्यं वचःशालिनाम् ॥

O, Nimba tree, your branches are bitter. Bitterer is your skin (bark). Your leaves are bitterer than even that (bark). The flowers (you bear) are (still bitterer) and above all these are your fruit. This, we had not seen anywhere else. Well, I don't praise you. By all the eloquent orators of the world, what deserves to be praised is that gracious seed whence your (good self's) birth occurred (in the first place).

हे निम्ब, तिक्तास्ते विटपाः। तव शाखाः तिक्तरसमयाः। त्वचो यदि, ततः तिक्ताः। यदि त्वचः परीक्षामहे, ताः तिक्ततराः भान्ति। ततोऽपि च्छदाः। तव तादृश्याः त्वचोऽपि तव पर्णानि तिक्ततराणि। तेभ्योऽपि प्रसवाः। पर्णेभ्योऽपि तव कुसुमानि तिक्ततराणि। ततोऽपि च फलानि। तव फलानि सर्वेषां तिक्ततमानि। एवं न दृष्टं क्वचित्। क्वापि वृक्षे एतावान् अतिशयो न वीक्षितः। अनन्यसाधारणस्तव गुणगणः। अथवा हे निम्बवृक्ष, त्वां न स्तौमि। तव स्तुतिं न करोमि। भवतोऽपि एतादृशगुणविशिष्टस्य सम्भवः यत आसीत्, तद्

बीजं श्रीमत् अवनौ वचःशालिनां स्तुत्यम् । कारण-गुणाः कार्ये संक्रामन्ति । तस्मात् त्वत्कारणं श्रीमद् बीजमेव प्रपञ्चेऽस्मिन् विद्यमानानां सर्वेषां वचःशालिनां स्तुतिविषयीभवितुं योग्यम्—इति ।

अत्र वाच्यमर्यादया परिस्फुरन्ती स्तुतिः व्यङ्ग्यमर्यादया निन्दायां पर्यवस्यति ।

एवं निम्बवृक्षमपदिश्य सर्वत्र अन्यापकारमेव कुर्वाणं विषमयं दुर्जनमुद्दिशति । हे दुर्जन, तव वचांसि, कार्याणि तत्फलानि च उत्तरोत्तरं सज्जनक्लेशदाने अधिकाधिकं समर्थानि । अथवा त्वां न स्तुमः, त्वत्कारणं वंशमेव प्रस्तुमः इति ।

उपदेशस्तु दुष्टात् कारणात् दुष्टतरं कार्यमुत्पद्यत इति ।

३४

अथ चूतनिम्बावपदिश्य वदति—

चूताः पल्लवमुद्गिरन्ति वितरन्त्येतत्पिकेभ्यस्ततः
तेऽप्येतेन कुहूः कुहूरिति कलं कुर्वन्ति कूजामिति ।
निम्बोऽपि स्वयमुद्गिरन् फलमनेनाराधयन् वायसान्
किञ्चित्तेषु ततो रटत्सु सफलं जन्म स्वकं मन्यते ॥

The mango tree produces blossoms and offers them to cuckoos. They in turn, sing "kuhoo" in melodious

tune as a result of (chewing these blossoms). The Nimba tree also produces (bitter) fruit and entertains the crows. When they caw harshly, the Nimba thinks that (the aim of) his life has been accomplished.

चूताः पल्लवमुद्गिरन्ति । आम्रवृक्षाः किसलयानि उत्पादयन्ति । एतत्, पिकेभ्यो वितरन्ति । कोकिलेभ्यः सादरमर्पयन्ति । ततः तेऽपि एतेन कुहूः कुहूरिति कूजां कलं कुर्वन्ति । आम्रपल्लवभक्षणेन कषायकण्ठाः कोकिलाः मधुरं कुहूरिति कूजन्ति । इति एतत् सर्वं दृष्ट्वा निम्बवृक्षः स्पर्धालुरिव फलमुद्गिरति । तिक्ततमं फलं प्रसूते । अनेन वायसान् आराधयति । अतिकर्कश-कण्ठान् वायसान् आनन्दयति । ततस्तेषु कोकिलेषु श्रवणकठोरं रटत्सु स्वकं जन्म सफलं मन्यते । आत्मनो जीवितं धन्यं मन्यते ।

एवं चूतनिम्बावपदिश्य उत्तमाधमराजानौ उद्दिशति । उत्तमो राजा श्रेष्ठान् पोषयति । ते मधुराणि काव्यानि रचयित्वा गायन्ति । एतदनुचिकीर्षुरधमः अधर्म्यैः धनैः दुष्कवीन् पोषयति । तेषु काव्याभासान् कर्कशं पठत्सु, अहो, मम जन्म सफलं जातम् इति नन्दति इति ।

उपदेशस्तु उत्तमाननुकुर्वन् अधमः कार्याभासैरेव धन्यम्मन्यो भवतीति ।

अथ पञ्जरे निक्षिप्तां शुकाङ्गनामपदिश्याह—

भोज्यं स्वादु पयः स्थितिर्मणिगणैरापिञ्जरे पञ्जरे
दूरे चिन्तयितुं च दंशमशकाः पारे गिरां लालनम् ।
सत्यं सर्वमथापि काननभुवि स्वाच्छन्द्यमव्याहतं
ध्यायन्ती विमना मनागपि शुकी नालम्बते निर्वृतिम् ॥

(For a captured parrot), food is sweet milk, residence is in a cage which is rendered golden by (the lustre of) strings of gems, gadflies and mosquitoes are not at all thinkable (lit : far from thought) Fondling is beyond words. All this is true. But, the perplexed parrot does not get even a bit of happiness (out of all this) contemplating on the unhampered freedom (that she had) in the forest.

बन्दीकृतायाः शुक्याः भोज्यं स्वादु पयः । आहारः मधुरं क्षीरम् । स्थितिः मणिगणैः आपिञ्जरे पञ्जरे । वासश्च रत्नमालिकाभिः उज्ज्वलीकृते पञ्जरे भवति । दंशमशकाः चिन्तयितुं च दूरे । ये कीटाः प्राणिनो दशन्ति ते दंशाः । ते च मशकाश्च अधुना शुक्याः चिन्ताया अपि न गोचराः । का कथा तत्कृतबाधायाः ?

स्वामिन्यादिभिः क्रियमाणं लालनं च गिरां पारे । वर्णनातीतं भवति । सर्वं सत्यम् । एतेषु किमपि न मिथ्या । अथापि शुकी विमनाः मनागपि निर्वृतिं न आलम्बते । सत्स्वपि बहुषु उपर्युक्तेषु सुखहेतुषु शुकाङ्गना स्वल्पमपि आनन्दं न लभते । कुत इत्याह—काननभुवि अव्याहतं स्वाच्छन्द्यं ध्यायन्ती इति । सा सततं वनभूमौ अनुभूतपूर्वं निरन्तरायं स्वातन्त्र्यं ध्यायति । एवं च शान्त्यभावात् तस्याः सुखं नास्तीत्यर्थः ।

एवं शुकीमपदिश्य अन्तःपुरं प्रापितां ग्रामस्य सुन्दरीमुद्दिशति । सा खलु अन्तःपुरे स्वादिष्ठं भोजनं लभते मणिगणाकीर्णे सौधे वसति । मशकमक्षिकापिपीलिकादिबाधायाः चिन्तापि नास्ति । राजा च दास्यश्च सदा लालनाय सज्जास्तिष्ठन्ति । तथापि सा अनुभूतचरं स्वातन्त्र्यं चिन्तयन्ती न सुखं प्राप्नोति—इति ।

उपदेशस्तु स्वातन्त्र्येण विना समस्तानि सुखसाधनानि निरर्थकानि, स्वातन्त्र्यमेव परमप्रमोदस्य कारणम्—इति ।

३६

अथ समुद्रमपदिश्याह—

प्राङ्मेघैः कियदम्बु पीतमुदधेः पीतेऽपि वृष्टं कियत् ?
वृष्टे चापि कियत्प्रलीनमवनौ ? पीतं कियत् प्राणिभिः ?

नेदं कश्चन वेद यत्तु किमपि प्रापावशिष्टं पुनः
घर्मान्ते सरितां मुखेन तदभूदीर्ष्यास्पदं पश्यताम् ॥

How much water was drunk from the sea by the clouds ? Of (the amount) that was drunk, how much was showered ? Of that which was showered, how much got absorbed in the earth ? How much was drunk by the living beings ? None knows (any thing about) this. But, if the sea gets back any remainder (of the water) through the rivers at the end of summer, it becomes the cause of jealousy of the onlookers.

उदधेः कियद् अम्बु मेघैः प्राक् पीतम् ? जलदाः खलु समुद्रादेव जलं गृह्णन्ति वर्षितुम् । प्राक् तथा गृहीतं जलं कियत ? पीतेऽपि वृष्टं कियत ? यावत् पिबन्ति मेघाः, तावत् न वर्षन्ति । गगने एव कियानपि भागो नश्यति । शिष्टमेव ते वर्षन्ति । वृष्टे अपि कियत् अवनौ प्रलीनम् ? भूमौ घर्मतप्तायां पतितं जलं बहु भूमावेव लीयते । पीतं कियत् प्राणिभिः । प्राणिनः स्थावराश्च चराश्च । अद्भिर्विना ग्लायमानप्राणानां प्राणित्वात् । तथा च स्थावरैः तरुगुल्मलतादिभिः, चरैः वन्यग्राम्यपशुभिः पक्षिभिः मनुष्यैश्च कियद् अम्बु पीतम् ? नेदं कश्चन वेद ।

न कोऽपि एतं विषयं जानाति। ज्ञातुमिच्छापि कस्यापि न विद्यते। घर्मान्ते नाम निदाघकालस्यावसाने यत् किमपि स उदधिः सरितां मुखेन प्राप, अवशिष्टं जलं, तत् पश्यतामीर्ष्यास्पदमभूत्। वर्षर्तौ नदीनां प्रवाहान् समुद्रे पततो दृष्ट्वा जनाः ईर्ष्यया "अहो, कियज्जलं लभतेऽसौ समुद्रः" इति वदन्ति। तस्मादेव सर्वमुदकं संगृहीतं मेघैः इत्येतत् विस्मरन्ति।

एवं समुद्रमपदिश्य उदारं राजानमुद्दिशति। तस्य राज्ञः कोशाद् धनं प्रजानां हिताय व्ययीभवति। कियदपि देशाभिवृद्धये, तटाकादीनां निर्माणाय च याति। वेतनत्वेन सेवकैर्बहु गृह्यते च। ततः कररूपेण राजनि किञ्चिद् धनं संगृह्णति, सर्वे तस्मै असूयन्ति। नैतद् युक्तमिति।

उपदेशस्तु "जनाः कस्यापि धनलाभं दृष्ट्वा ईर्ष्यन्ति, पूर्वं तेन कियद् व्ययितम्" इति न जानन्ति, असूया नाम प्रजानां स्वाभाविको गुणः—इति।

३७

अथ विश्वाधारं सूर्यमपदिश्याह—

मेघं द्वारतया विधाय भुवनान्याप्लावयस्यम्भसा
चन्द्रं द्वारतया विधाय सवितः! पुष्णासि सर्वौषधीः।

यस्त्वीषत्तपसीव तत्तु कुरुषे स्वेनैव तेनाधुना

दातृत्वं घनचन्द्रयोः परिणतं क्रौर्यं तु शिष्टं त्वयि ॥

O, Sun ! You drench all the worlds with water making the cloud an agent (lit : door). Making the moon your agent, you nourish all plants. But, when you blaze, you do it yourself. So, now, generosity finally goes to the cloud and the moon. Only cruelty remains in you. (in the view of the world)

हे सवितः ! हे सूर्य, मेघं द्वारतया विधाय अम्भसा भुवनानि आप्लावयसि । जलदं द्वारीकृत्य सलिलेन वसुन्धरामार्द्रयसि । चन्द्रं द्वारतया विधाय सर्वौषधीः पुष्णासि । इन्दुं द्वारं कृत्वा सर्वान् वृक्षान् पोषयसि । यत्तु ईषदिव तपसि, तत्तु स्वेनैव कुरुषे । तत्र द्वारत्वेन कमपि नाश्रयसि । तेन किं फलितम् ? अधुना दातृत्वं घनचन्द्रयोः परिणतम् । घनस्यैव खलु जलद इति नाम लोके प्रथते । ओषधीश इति च चन्द्रस्य नाम वदन्ति । क्रौर्यं तु शिष्टं त्वयि । त्वयि क्रूरता एव अन्ततः पर्यवसन्ना । तपनः, चण्डांशुः इति किल सूर्य-माह्वयन्ति ।

एवं सूर्यमपदिश्य राजानमुद्दिशति नीलकण्ठः । स हि कानपि अधिकारिणो द्वारीकृत्य प्रसादं प्रजाः प्रापयति ।

यदा तु दण्डो विधेयः, तदा स्वयं विदधाति । जनः निदानं विस्मृत्य द्वारं प्रसादकारणं मन्यन्ते । दण्डस्य विधातारं राजानमेव 'क्रूरोऽयम्' इति निन्दन्ति इति।

उपदेशस्तु "साधारणो जनः वस्तूनां याथातथ्यं ज्ञातुं न शक्नोति । उन्नते स्थाने स्थितैः कदाचित् अकारणमेव निन्दायाः पात्रैः भूयते" इति ।

३८

अथ श्वानमपदिश्य वदति—

द्वारं न प्रजहातु जातु, नियतं जागर्तु रात्रीरपि,
स्वल्पेनापि मुदं प्रयातु, किमतः ? श्वा श्वेव तावानपि ।
सम्पाद्यो महता धनेन, सततं भोज्यश्च सान्त्वैरिति
त्यक्त्वा मत्तगजं पदेऽस्य महतः स्थाप्यः किमेतावता ? ॥

The dog may never leave the door, may regularly keep awake all nights, may be pleased by even trivial things. But, what does it matter? With all this, a dog is (after all) a dog.

An elephant has to be bought paying enormous money and has also to be always fed with many appeasements. But, does it mean that the elephant has to be discarded and the be dog has to placed in his position?

श्वा जातु द्वारं न प्रजहातु। कदाचिदपि स्वामिनो गृहस्य द्वारदेशं न त्यजतु। सदैव तत्र तिष्ठतु नाम। अपि च, नियतं रात्रीरपि जागर्तु। चोरेभ्यो गृहस्य रक्षणाय सकलाः रात्रीः निद्रां विना जागृतो भवतु। स्वल्पेनापि मुदं प्रयातु। अल्पेन आहारेण कदाचित् पार्श्वपरिमर्शनादिना च श्वा तुष्यतु। अतः किम्? तावानपि श्वा श्वा एव। तावद्भिः गुणैः युतोऽपि श्वा श्वत्वं न मुञ्चति खलु। एतद्वैपरीत्येन गजः महता धनेन सम्पाद्यः। बहुना वित्तेन क्रेयः। सततं सान्त्वैः भोज्यः। अविरतं सान्त्वनवचनानि प्रयुज्य भोजनीयः। एतावता किं मत्तगजं त्यक्त्वा, अस्य स्थाने श्वा स्थाप्यः? नैव। न खलु गजस्य कर्म शुना कर्तुं साध्यम्।

एवं श्वानमपदिश्य नीचं कमप्युद्दिशति नीलकण्ठः। नीचः सुखमाराध्यः। सदा स स्वामिनः सविधे तिष्ठति, तद्रक्षणाय सर्वदा जागरूको भवति। अल्पेनापि प्रभुप्रसादेन तुष्टो जायते। श्रेष्ठो विद्वांस्तु दुष्प्रापः, सदा गौरवमपेक्षते च। तथापि न तस्य पण्डितस्य स्थाने नीचं स्थापयितुं युज्यते। यदि तथा क्रियेत, विद्याभ्यासमन्त्रालोचनादेः का गतिः?

उपदेशस्तु लोके अल्पाः सुलभाः, महान्तो दुर्लभाः, सौलभ्यमात्रमाश्रित्य महतां स्थाने अल्पानां नियोजनं न साम्प्रतम्—इति।

अथ नद्यामुत्पद्य समुद्रं प्राप्तान् मत्स्यानपदिश्याह—

उत्पन्नाः सरितां ह्रदेषु सुचिरं तत्रैव पुष्टास्ततः

प्राप्ताः प्रावृषि सागरं जलचरास्तासां मुखादेव ये ।

द्वित्रैरेव दिनैस्तिमिङ्गिलकुलस्यासाद्य कूटस्थतां

मृष्यन्त्यद्य न ते रहस्यपि कृतां नादेयतासंकथाम् ॥

(The fish) which were born in the pools of rivers, grew there for a long while and also reached the ocean through the very rivers in rainy season, have acquired the supremacy of the school of whales in a couple of days and now don't tolerate the talk of their origination in river, even in privacy.

ये जलचराः सरितां ह्रदेषु उत्पन्नाः, नदीनां पल्वलेषु सञ्जाताः, अपि च सुचिरं तत्रैव पुष्टाः, बहुकालं तासु नदीष्वेव पोषं प्राप्तवन्तः, अपि च प्रावृषि तासां मुखादेव सागरं प्राप्ताः, वर्षर्तौ नदीनां द्वारेणैव समुद्रं गताः, ते महामत्स्याः द्वित्रैरेव दिनैः तिमिङ्गिलकुलस्य कूटस्थतामासादयन्ति । द्वौ वा त्रयो वा द्वित्राः । तावद्भिर्दिवसैरेव, तिमीन् मत्स्यान् ये गिलन्ति तादृशानां तिमिङ्गिलानां वंशस्य मुख्यतां भजन्ते । ततश्च रहस्यपि कृतां नादेयता-

संकथां न मृष्यन्ति । नद्यां भवा नादेयाः (ढीभ्यो ढक्) तद्भावो नादेयता । नदीजत्वमिति यावत् । तद्विषयां संकथां नाम संवादं, प्रकाशे आस्तां, रहस्यपि न मृष्यन्ति । एकान्तेऽपि न सहन्ते । तिमिङ्गिलकुलकूटस्थानामस्माकं नदीषु जन्म वास्तवमपि न प्रकाशार्हमिति ते अभिमन्यन्त इत्यर्थः ।

एवं मत्स्यानपदिश्य ग्रामे दरिद्रकुटुम्बे जनित्वा ततः पत्तनं गत्वा ये श्रीमन्तो जायन्ते, तानुद्दिशति नीलकण्ठः । ते हि मिथ्याभिमानप्रेरिताः स्वस्य ग्रामे वा निर्धनकुटुम्बे वा जातं जन्म वास्तवमपि कदाचिदप्युद्घाट्यमानं न सहन्ते ।

उपदेशस्तु महत्त्वं प्राप्तवन्तो नराः दुरभिमानेन आत्मजन्मदेशस्य निगूहनं कुर्वन्ति, न तद्युक्तम्—इति ।

४०

अथ गर्जन्तं मेघमपदिश्याह—

पन्थाः कर्दमितः पयः कलुषितं हंसाः कृता दूरतः
पीड्यन्ते च यदेवमर्थिन इति क्रूरारवैश्चातकाः ।
सोढाहे तव हे पयोद सकलं शक्नोषि दातुं स्वतः
किं त्वं शीकरमेकमप्युदधिना लोभो यदि स्वीकृतः ॥

The road has been made muddy, the water turbid and the swans have been

driven away. Also these chataka birds are tortured with harsh words like "beggars". Well, cloud! I will tolerate all this. But, will you be able to give even a single drop of water if the ocean becomes avaricious?

हे पयोद, त्वया वर्षता पन्थाः कर्दमितः। मार्गः पङ्किलः कृतः। (कर्दमः सञ्जातः अस्य इति कर्दमितः, तदस्य सञ्जातमिति तारकादिभ्य इतच्) पयः कलुषितम्। सर्वं जलमाविलं कृतम्। हंसाः दूरतः कृताः। वर्षाकाले हंसाः मानसं प्रति प्रयान्तीति कविसमयः। अपि च चातकाः क्रूररवैः अर्थिन इति पीड्यन्ते। 'याचका यूयम्' इति कठोरैः वचनैः गर्जितमिषेण चातकान् धिक्करोति मेघः। हे मेघ, तव सकलं सोढाहे। सर्वं ते विचेष्टितं सहिष्ये। न निन्दिष्यामि। उदधिना यदि लोभः स्वीकृतः, किं त्वं शीकरमपि दातुं शक्नोषि? उदधेः त्वं सर्वं वारि स्वीकरोषि। यदि स लोभी भूत्वा त्वां निषेधति, त्वं स्वयमेकमपि अम्बुकणं दातुं शक्नोषि किम्? नैव। एवं च तवेदं दुश्चेष्टितं सोढुमशक्यम्।

एवं मेघमपदिश्य राज्ञः कञ्चिदधिकारिणमुद्दिशति। स हि अधिकारी जनान् हिंसति नितान्तम्। पुनश्च तत्र साहाय्काय गच्छतीः प्रजाः कठिनवाग्भिः खण्डयति।

तेन स्वयं दीयमानं किमपि नास्ति । यदि राजा कृपणो भवति किं वा सोऽधिकारी दद्यात् ?

उपदेशस्तु वास्तवाद् दातुः, तदधस्ताद् विद्यमाना अधिकारिणः गर्ववत्तरा इति ।

४१

अथ शङ्करस्य चूडायां स्थितां चन्द्रकलामपदिश्याह—

सर्वज्ञो यदि, शङ्करो यदि, महादेवो यदि प्रायशो
देवानामपि दैवतं यदि, तदप्यास्तामिदं दूरतः ।
धुत्तूरैः फणिभिः कपालवलयैरन्यैश्च ते संगतिः
चूडाचन्द्रकले ! न तावदुचिता याचे बहिर्गम्यताम् ॥

Lord Shiva might be omniscient, conferrer of happiness, the greatest god as well as the god of gods. Let all this rest at a distance. O crescent on the head (of Shiva) ! Association with Dhuttura flowers, serpents and garlands of skulls is not fit for you. I implore thee ; please get out (of that place).

हे चूडाचन्द्रकले ! शिवस्य शेखरे विराजमाने सुधांशुलेखे ! अयं शिवः सर्वज्ञो यदि तदास्ताम् । जानातीति ज्ञः । (इगुपधज्ञाप्रीकिरः कः । ) सर्वस्य ज्ञः सर्वज्ञः । शिवे सर्वज्ञता अस्ति चेदस्तु नाम । तथा

स शङ्करः, लोकस्य शुभङ्करो यदि, तदप्यस्तु। स महादेवोऽप्यस्तु। प्रायशो देवानामपि दैवतं यदि तदप्यास्ताम्। न वयं विवदामहे। इदं दूरतः आस्ताम्। सर्वमिदं कथ्यमानं दूरत एव भवितुं योग्यम्। धुत्तूरैः फणिभिः कपालवल्यैः अन्यैश्च ते सङ्गतिः न उचिता। शिवस्य शिरसि दुर्गन्धीनि धुत्तूरकुसुमानि, विषमयाः सर्पाः, भयङ्कराः नरकपालहाराः तादृशा एव अन्ये पदार्थाश्च सन्ति। तैः सह ते सङ्गतिः न उचिता। त्वयि तादृशानां सहवासो नोपपद्यते। याचे त्वां, बहिर्गम्यताम्। शीघ्रमेतेषः सामीप्याद् दूरं गम्यताम्। न वयं सौन्दर्यनिधिं त्वां नयनोद्वेगजनकानां मध्ये द्रष्टुं शक्नुम इति यावत्। यथाह कविकुलगुरुः—

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतः
त्वमस्य लोकस्य च नेत्रकौमुदी॥ इति।

चन्द्रकलायाः शिवशिरसि आभरणत्वेन स्थितौ कारणमिदमस्ति—दक्षाध्वरेऽनपराधोऽपि चन्द्रः सम्भ्रमवशात् क्रुद्धेन वीरभद्रेण इतरैः अपराधिभिः सह शिक्षितः; पश्चात्स्वानपराधितावेदनहृष्टेन परमेश्वरेण अदण्ड्यदण्डन-

दोषशान्तये शिरसा धारितः । यथोक्तं महाभारते आनु-शासनिके पर्वणि—

सोऽस्तत्र मया देवि कुपितेन मयार्दितः ।
पश्यंश्चानपराधी सन् पादाङ्गुष्ठेन ताडितः ॥
तथा विनिकृतेनाहं सामपूर्वं प्रसादितः ।
तन्मे चिन्तयतश्चासीत् पश्चात्तापः पुरा प्रिये ॥
तदाप्रभृति सोमं हि शिरसा धारयाम्यहम् । इति उमां प्रति महेश्वरेण ।

एवं चन्द्रकलामपदिश्य क्रूरजनावृतं राजानमाश्रयन्तीं पण्डितसंसदमुद्दिशति । राजा विद्याश्रयो राजाधिराजश्च आस्तां नाम, दुर्जनैः कर्णेजपैः जनहिंसकैश्च स सदा परिवृतो भवति । अतः पण्डितसंसदः स्थितिः तादृशे राजास्थाने न शोभत इति ।

उपदेशस्तु सगुणस्यापि जनस्य दुर्जनानुयातस्य आश्रयणं विद्यावतां न युज्यत इति ।

४२

अथ अवर्षित्वा यान्तमभ्रमपदिश्याह—

अस्यां प्रावृषि चातकैर्जलकणा लब्धा न चेत् किं ततो
भाविप्रावृषि दास्यते द्विगुणमित्यभ्र त्वया गम्यते ।

एतेऽद्यैव लयं व्रजन्ति पृथुकैरेतत्कुलीनोऽपि चे-
देकः प्राणिति, तावदेव तदलं तत्रैव नः संशयः ॥

What (does it matter) if some drops of water are not obtained by the chataka birds in this rainy season? Double will be given (to them) in the coming season. (Thinking) thus, cloud, you leave. These (birds), with (all their) young ones, (are going to) meet with disaster right now. If even one (single bird) of this species remains alive, it is enough. But we are doubtful of even that.

हे अभ्र, इति त्वया गम्यते। इत्थं चिन्तयित्वा त्वया यायते। कथमित्याह—चातकैः अस्यां प्रावृषि जलकणा न लब्धाः चेत् किं ततः? अस्मिन् वर्षाकाले चातकपक्षिभिः शीकराः न प्राप्ताः चेत् का वा हानिः? भाविप्रावृषि द्विगुणं दास्यते। आगामिन्यां प्रावृषि भूरि वर्षित्वा द्विगुणं वितरिष्यते—इति। भाविनीषु वर्षासु द्विगुणदानस्य शक्यत्वात् आसु वर्षासु अदानेऽपि न दोषः इति भावयता मेघेन गम्यत इत्यर्थः। वस्तुतः किं भवतीत्याह—एते अद्यैव पृथुकैः लयं व्रजन्ति। दीनाः चातकाः अधुनैव जलाभावात् स्वशावकैः साकं

मरिष्यन्ति । एतत्कुलीनः एकोऽपि चेत् प्राणिति, तावदेव अलम् । चातककुलजः एकोऽपि यदि अवशिष्येत, वयं तुष्यामः । उत्तरत्र त्वया दास्यमानेन जलेन स जीविष्यति, वंशश्च तस्य कथमपि वर्धेत— इति । परन्तु तत्रैव नः संशयः । एकोऽपि सजीवः भाविप्रावृट्पर्यन्तमवस्थास्यते वा ? इति अस्माकं सन्देहो वर्तते । चातकैः भूमिस्थितजलस्याग्रहणात् न तेभ्योऽदानं मेघस्योचितमिति यावत् ।

एवं मेघमपदिश्य पण्डितेभ्यो धनमददानं राजानमुद्दिशति । राजा हि इदानीं न चेत् कदाचिदुत्तरत्र दास्याम इति बुद्ध्या पण्डितान् विस्मरति । यावता कालेन स दास्यति, तावता पण्डिताः भविष्यन्ति वा ? इति अस्माकं सन्देह इति ।

उपदेशस्तु दातृभिः युक्ते समये आश्रितेभ्यो जीविका प्रदेया — इति ।

४ ३

अथ धुत्तूरमपदिश्याह —

वर्णस्तेऽतिमनोरमः शिरसि ते वासो मृडानीपतेः
प्रत्येतव्यतरं च काञ्चनमिति प्रौढं पुनर्नाम ते ।

किं कर्तव्यमितः परं च भवता धुत्तूर लोकाः पुनः
न क्रीणन्ति न च स्पृशन्ति न च वा पश्यन्ति गन्धप्रियाः ॥

Your colour is pleasing. Your abode is on the head of Lord Shiva. Besides, you have a glorious and respected name "Kanchana" ( i. e. gold ). O, Dhuttura, what more have you to do ? But, people, being fond of fragrance, do not buy or touch or even (care to) look at you.

हे धुत्तूर ! तदाख्यकुसुम । अतिमनोरमः ते वर्णः । स्वर्णसदृशः तव वर्णः अतीव हृदयङ्गमो वर्तते । मृडानी-पतेः शिरसि ते वासः । मृडानी पार्वती । तस्याः पत्युः शिवस्य मूर्धनि तव वसतिः । शिवस्य धुत्तूरप्रिय-त्वात् । काञ्चनमिति च ते नाम । (उन्मत्ते धूर्तधुत्तूर-धुस्तूरकितवाश्शठः । धुर्धूरः काञ्चनाह्वोऽथ — इति वैजयन्ती ।) कीदृशं नामेत्याह —प्रौढं प्रत्येतव्यतरं चेति । गौरवेण उन्नतं विश्वाससमुत्पादकं चेति यावत् । एवं चेत् अतः परं भवता किं कर्तव्यम् ? मनोहराकारप्रोन्नतस्थान-गौरवार्हनामभ्योऽधिकं किं वा सम्पादयितुं शक्यम् ? पुनः, अथापि लोकाः न क्रीणन्ति । जना द्रव्यं दत्त्वा त्वां नैव गृह्णन्ति । न च स्पृशन्ति । क्रयणमास्तां तावत, हस्तेनापि एकदा न

परामृशन्ति । तदप्यस्तु । न च वा पश्यन्ति । चक्षुषी अपि त्वयि न पातयन्ति । कुतो लोका एवं कुर्वत इत्याह-गन्धप्रियाः इति । यस्मात् ते कुसुमेषु गन्धं मुख्यतया वाञ्छन्ति, अतः गन्धशून्ये त्वयि कथं वा अनुराग उत्पद्येत तेषाम् ? इति ।

एवं धुत्तूरमपदिश्य विद्याशून्यं कमप्युद्दिशति । स हि श्रेष्ठानि वस्त्राणि धारयति, कथमपि राज्ञः अनुग्रहं प्राप्य उन्नतं स्थानमाक्रामति, स्पृहणीयं नाम च धारयति । परन्तु जनाः तं न प्रशंसन्ति, न आह्वयन्ति, नापि सगौरवमीक्षन्ते । विद्याभिमानी हि लोकः इति ।

उपदेशस्तु कीर्तिं प्रेप्सुभिः विद्या समुपार्जनीया, तां विना रूपस्थाननामादिकं न कीर्तिसम्पादने शक्तम्—इति ।

४४

अथ सर्वध्वंसेन विजृम्भमाणं निदाघमपदिश्याह—

राज्यं येन कृतं न तस्य शृणुमः कामस्य नामाधुना
येषामेव गिरः पुरा, परभृतैस्तैरद्य मौनं धृतम् ।
व्याप्ता येन दिशो न साम्प्रतमसौ मन्दानिलः स्पन्दते
किं ब्रूमोऽवतरन्निदाघहतको विश्वं नवं निर्ममे ॥

We don't now hear even the name of Kama, who ruled this kingdom

(before). The cuckoos, whose songs alone (were in vogue) before have become silent. The breeze, who had pervaded all space does not move now. Well, what can we say? This wretched summer has created a different world, (soon after) descending.

निदाघमहिम्नि सर्वत्र प्रसृते सति किमभूदित्याह— राज्यमिति । येन कामेन राज्यं कृतं तस्य कामस्य नाम अधुना न शृणुमः । यो मन्मथः वसन्ते राजेव व्यजृम्भत, तस्य नामापि अद्य न श्रूयते । अतितापाभिभूता जनाः किमपि सुखमनुभवितुं न शक्ताः । येषामेव पुरा गिरः, तैः परभृतैः अद्य मौनं धृतम् । परैः काकादिभिः भृताः पोषिता इति परभृताः पिकाः । तेषामेव गीतं वसन्ते श्रूयते स्म । इदानीं तैः पिकैः मौनव्रतमास्थीयते । येन दिशो व्याप्ताः, असौ मन्दानिलः साम्प्रतं न स्पन्दते । मलयमारुतो यः सकला दिशः व्याप्तवान्, सोऽद्य स्पन्दितुमपि न प्रभवति । किं ब्रूमः ! अधिकं वक्तुं न वयं शक्नुमः । अवतरन् निदाघहतकः नवं विश्वं निर्ममे । दुष्टोऽयं घर्मकालः प्रविशन्नेव कमपि नूतनं प्रपञ्चं निर्मितवान् ।

एवं निदाघमपदिश्य कमपि राजाधममुद्दिशति । पुरा अन्यस्य राज्ञः शासनं प्रावर्तत । अधुना तस्य नामापि

नाम्नायते। ये विद्वांसः तदा स्ववचनैः सर्वानानन्दयन्, त इदानीं तूष्णीं स्थिताः। या शान्तिः सर्वं लोकं व्याप्तवती, सा अधुना नास्त्येव। हन्त! अयं नूतनो राजा अन्यदेव जगन्निर्मितवान् इति।

उपदेशस्तु अधमेषु अधिकारारूढेषु उत्तमानां तत्सह-कारिणां च किमपि स्थानं न भवति—इति।

४५

अथ तमसि क्लिश्यन्तं कोकमपदिश्याह—

पीयन्तां तमसा दिशो, विदधतां नीचाः पिशाचाः स्मयं
व्याक्रोशन्तु शिवाः, कियच्चिरमसौ कालः सखे स्थास्यति!
अद्योदेष्यति भानुरेष्यति दिशामद्य प्रसादो मुखे-
ष्वद्य स्वां प्रकृतिं गमिष्यति मही कोक क्षणं क्षम्यताम्॥

Let the directions be pervaded by darkness; let the vile ghosts exhibit their arrogance; let (also) the jackals yell (as much as they like). Friend, how long will this period last? O, Koka! Very soon the sun will rise, serenity will appear in the faces of all directions and the world will return to normalcy, please wait a moment.

सखे कोक! मित्र चक्रवाक! (कोकश्चक्रश्चक्रवाकः इत्यमरः) तमसा दिशः पीयन्ताम्। अन्धकारेण सकलाः

ककुभो व्याप्यन्ताम् । नीचाः पिशाचाः स्मयं विदधताम् । निकृष्टचरिताः भूतप्रेतादयो गर्वं कुर्वन्तु । यथेच्छं गर्वेण विहारं कुर्वन्त्वित्यर्थः । शिवाः व्याक्रोशन्तु । क्रोष्टारः क्रोशं कुर्वन्तु । (शिवा हरीतकी क्रोष्टा शमी नवामलक्युमा इति वैजयन्ती) असौ कालः कियच्चिरं स्थास्यति ? कियदवधिरियं रात्रिः ? न खलु इयं शाश्वती । कथमित्याह—अथ भानुः उदेष्यति । अधुनैव सूर्य उद्गमिष्यति । अद्य दिशां मुखेषु प्रसाद एष्यति । शीघ्रमेव सर्वासु दिक्षु प्रसन्नता आविर्भविष्यति । अद्य मही स्वां प्रकृतिं गमिष्यति । सकला भूमिः प्रकाशिता नैजं निसर्गं प्राप्स्यति । क्षणं क्षम्यताम् । क्षणं यावत् त्वया सह्यताम् । ततस्तव क्षेमं भविष्यतीति ।

एवं कोकमपदिश्य विपदि दुःख्यन्तं कमपि उद्दिशति । विविधा आपदः प्रकामं दृश्यन्ताम् । तथापि सा स्थितिः परिवर्तते । सुखमयानि दिनानि भविष्यन्ति । सर्वं कष्टं परिहृतं भविष्यति । किञ्चित् सह्यतामिति ।

उपदेशस्तु " लोकस्य दशा चक्रनेमिक्रमेण नीचैः उपरि च गच्छति । जीवन्तं नरं वर्षशतादपि आनन्दः एति । अतः कष्टानि सोढव्यानि " इति ।

४६

अथ समीपस्थस्य तरोः किमपि प्रयोजनमघटयन्तं समुद्रमपदिश्याह—

मेघा इत्यवतीर्य केऽपि नभसः सर्वं पयो गृह्णते

यादांसीति समागतास्तत इतोऽप्यन्ये रमन्ते सुखम् ।

यस्तु स्वान्तिक एव तस्य महतस्तालस्य कालाद् बहोः

शुष्कस्यापि हि नोपयोगकणिकां पश्यामि तेनाब्धिना ॥

Some (unheard of) clouds descend from the sky and take away all the water (of the sea). Others come from hither and thither as aquatic animals and rejoice happily (in the sea). But, to the big palmyra tree who is standing near by since a long time, I don't see a bit of help rendered by the sea even when it (the tree) is withering.

केऽपि मेघाः इति नभसः अवतीर्य सर्वं पयो गृह्णते । अश्रुतपूर्वाः केऽपि मेघनाम्ना आकाशादवरुह्य सर्वं जलं स्वीकरिष्यन्ति । समुद्रस्येति शेषः । तत इतः यादांसीति समागताः अन्येऽपि सुखं रमन्ते । यस्मात् कस्मादपि प्रदेशात् समागताः जलजन्तवः स्वैरं क्रीडन्ति । समुद्रस्य जले इति शेषः । (यादांसि जलजन्तवः इत्यमरः) यस्तु तालवृक्षः बहोः कालात् स्वान्तिक एवास्ति, समुद्रस्य समीप एव तिष्ठति, तस्य महतः तालस्य तेनाब्धिना उपयोगकणिकामपि न पश्यामि । प्रयोजनमण्वपि तेन

समुद्रेण क्रियमाणं न अवलोकयामि। कीदृशस्य तालस्य? शुष्कस्यापि। जलाभावेन शोष्यमाणशरीरस्यापीत्यर्थः। अहो दुःखकरोऽयं समुद्रवृत्तान्तः, यत्र केऽपि आगन्तुकाः तोष्यन्ते, परिचिताः शोष्यन्त इति।

एवं समुद्रमपदिश्य कमपि धनिकमुद्दिशति। तस्य धनिकस्य गृहमागताः केऽपि आगन्तुकाः बहु धनं गृहीत्वा गमिष्यन्ति। बहवः अभ्यागताः तस्मिन् गृह एव स्थित्वा सत्काराननुभवन्तः तुष्यन्ति। यस्तु सुहृत् समीप एव बहोः कालात् वर्तते, तस्मिन् दारिद्र्याग्निना दह्यमानेऽपि अयं धनिकः किमपि साहाय्यं न करोति। अहो, शोककारणमिदम्—इति।

उपदेशस्तु कस्यापि भाग्यं केनापि भुज्यते। सामीप्यादिकं नानुग्रहहेतुः। तत्र दिष्टं कारणम्। केवलोऽनुशोकोऽस्माभिः कर्तुं शक्यत इति।

४७

अथ गते वसन्ते शोचन्तं परभृतमपदिश्य वदति—

आक्रामन्तु तमेव चूतमपि च क्रोशन्तु रेफोत्तरं
डिम्भोऽस्माकमसीति वाभिदधतां काका वराकाः स्वयम्।
गन्तव्यं क ततोऽन्यतः परभृत? क्षन्तव्यमेतावद-
प्यग्रे कस्य निवेद्यतामिदमतिक्रान्तो वसन्तोऽधुना॥

Let the mean crows occupy the very mango tree (which is your dwelling).

Let them cry harshly. Or even let them say on their own (pointing at you). " You are our kid ". O Cuckoo, where else can you go? You have to tolerate so much. Where (lit: before whom) can you complain about this? The spring season is over.

हे परभृत, हे कोकिल। वराकाः काकाः तमेव चूतमाक्रामन्तु। नीचा बलिभुजः तमेव आम्रवृक्षमाक्रम्य उपविशन्तु यत्र वसन् त्वं गायसि। अपि च रेफोत्तरं क्रोशन्तु। कर्णकठोरं गर्ह्यं ध्वनिं ते उच्चैः उत्पादयन्तु। (गर्ह्योऽपकृष्टचेलार्चरेफयाप्याधमावमाः, उत्तरं प्रतिवाक्ये स्यादुदीच्ये प्रवरोर्ध्वयोः—इ वैजयन्ती) अथवा- "डिम्भोऽस्माकमसि" इति अभिदधताम्। त्वमस्माकं शावकोऽसि—इति ते काकाः त्वामाह्वयन्तु नाम। कुतः? ततोऽन्यतः क्व गन्तव्यम्? अस्माद् वृक्षादन्यत्र क्व वा यातव्यम्? न क्वापि स्थानं विद्यते। एतावत् क्षन्तव्यम्) सर्वं काकचेष्टितं सोढव्यमेव। अपि च, इदं कस्य अग्रे निवेद्यताम्? कस्य पुरो रुद्यताम्? न कस्यापि। कुत इत्याह—वसन्तः अधुना अतिक्रान्तः। यस्तवाश्रयप्रदाता मधुः, स गत एव। तस्मात् निवेदनस्य स्थलं किमपि नास्तीत्यर्थः।

एवं कोकिलमपदिशन् कमपि पण्डितमुद्दिशति । दुर्वचना दुष्टाः तवाधिष्ठानभूतां सभामाक्रामन्तु, कर्कशं भाषन्तां, त्वामपि स्वसमूहान्तर्गतं वदन्तु, सर्वं तत् क्षन्तव्यम् । अन्यत्र गन्तुमशक्यत्वात् । पूर्वस्य राज्ञः कालः अतिक्रान्तः । तस्मात् कस्याप्यग्रे निवेदयितुं न शक्यते इति ।

उपदेशस्तु सुकाले गते दुष्टा एव सर्वत्र प्रभवन्ति । तदा सज्जनेन क्षमैव आश्रयणीया भवति । नान्यो मार्गो वर्तत इति ।

४८

अथ सर्वदा कर्कशं रुवन्तं काकमपदिश्याह—

गन्तव्यं शिशिरेण नाम, भवितव्यं नाम चूताङ्कुरैः
तानास्वाद्य पिकः करिष्यति तदा नाम स्वयं पञ्चमम् ।
आस्तामेष तथाविधस्त्वमसि किं काक ! स्वतन्त्रस्य ते
कालोऽयं स्वर एष भोज्यमिदमित्येषा कुतो यन्त्रणा ! ॥

The winter should elapse, the mango blossoms should appear and then, after tasting them, the cuckoo will sing the 'Panchama' (fifth) note. Let this (cuckoo) be that way. O crow, are you of that type? (Certainly not). Why should there be any restriction as

to the season, note or food in your case while you are (completely) independent?

हे काक। कोकिलगानस्य विषये इमे नियमाः श्रूयन्ते-यथा—शिशिरेण गन्तव्यम् नाम। शीतकालेन निर्यातव्यमित्येकः। अयं नियमः सर्वैरभ्युपगत इत्यर्थः। (नाम प्रकाश्यसंभाव्यक्रोधोपगमकुत्सने इति वैजयन्ती) एवमुत्तरत्रापि चूताङ्कुरैः भवितव्यं नाम। चूतांकुराः उत्पद्येरन् इत्यपरो नियमः। तान् आस्वाद्य तदा पिकः पञ्चमं स्वयं करिष्यति नाम। चूतांकुरास्वादकषायकण्ठः पुंस्कोकिलो मधुरं पञ्चमाख्यं स्वरं वसन्ते कूजिष्यति इत्यपरो नियमः। एवंच कोकिलगाने कालाहारस्वररूपेण त्रिविधो नियमः। वसन्ते एव, चूतांकुरभक्षणोत्तरमेव, पञ्चममेव कोकिलो गायतीति। एष तथाविधः आस्ताम्। तादृङ्नियम निगडित एव भवत्वसौ। तथाविधः त्वमसि किम्? नैव। स्वतन्त्रस्य ते एषा यन्त्रणा कुतः? स्वाधीनस्य तव नियन्त्रणा कस्मात्? कीदृशी यन्त्रणा? अयं कालः एष स्वरः; इदं भोज्यम्—इतिरूपा। सर्वनियन्त्रणा-विनिर्मुक्तस्त्वमेव धन्य इति यावत्।

एवं काकमपदिश्य दुष्काव्यानि रचयन्तं कविपाश-मुद्दिशति। सुकवेः " अयं विषयः, इयं रीतिः, इदं

छन्दः " इत्यादिः नियमो वर्तते। दुष्कवेस्तु कापि नियन्त्रणा नास्तीति।

उपदेशस्तु लोके सतां देशकालावस्थादिः बहुविधो नियमोऽस्ति। दुष्टानां तु कोऽपि नियमो नास्तीति ते स्वच्छन्दा भवन्तीति।

अत्र व्याजस्तुतिरपि अप्रस्तुतप्रशंसया संकीर्यते।

४९

अथ बहूनां प्राणिनामाश्रयभूतं महान्तं कमपि वृक्षमपदिश्याह—

काका मूर्ध्नि सुखं वसन्ति, शतशः शाखासु शाखामृगाः,
घूकाः कोटरगह्वरेषु, मशकैर्दंशैश्च सान्द्रं तलम्।
आधारः कियतामसि, स्थिरतरं लब्धं च शुद्धं यशः
पान्था नोपसरन्ति चेत् क्षतमितः किं वृक्षराजस्य ते॥

The crows live happily at your top. Hundreds of monkeys dwell on your branches. The owls (have made their home) in the caverns of your hollows. Your foot is densely covered by (various insects like) mosquitos and gadflies. Of how many are you the support? (i.e. You are supporting innumerable living beings) You have also acquired

permanent and spotless reputation. If travellers do not approach you, there is no harm to you, the king of trees.

हे वृक्षराज, तव मूर्ध्नि काकाः सुखं वसन्ति। बलिभुजः ससन्तोषं निवासं कुर्वन्ति। शतशः शाखामृगाः शाखासु वसन्ति। असंख्याः कपयः तव विटपेषु वर्तन्ते। कोटरगह्वरेषु घूकाः वसन्ति। निष्कुटगुहासु दिवामीताः लीना विद्यन्ते। मशकैः दंशैश्च तलं सान्द्रम्। विविधैः कृमिकीटादिभिः तव मूलं सान्द्रतया व्याप्तम्। स्थिरतरं शुद्धं च यशो लब्धम्। अचला धवला कीर्तिः त्वया सम्पादिता। पान्थाः त्वां नोपसरन्ति चेत्, वृक्षराजस्य ते किं क्षतम्? पथिकाः त्वां नोपसर्पन्ति चेद् आश्रयार्थं, तरुचक्रवर्तिनः तव का वा हानिः? अल्पमिमं विषयमाश्रित्य औदार्यनिलयस्य बहुलोकाश्रयस्य तव चिन्तायाः किमपि कारणं नास्ति।

वस्तुतस्तु हीनं कमपि वृक्षमपदिश्यैवं वदति। काकाः शाखामृगाः घूकाः दंशा मशका वा त्वामाश्रयेयुः। सर्वे ते नीचाः। अत एव त्वां न कश्चन पान्थ उपसरति। त्वं तु तदजानन् वृथा गर्वमुद्वहसीति।

एवं नीचवृक्षमपदिश्य नीचं कमपि राजानमुद्दिशति। त्वं जाराणां चोराणां नृशंसानां वा आश्रयोऽसि। धीरा

विवेकिनः त्वां नाश्रयन्त्येव । मृषाभिमानं तु त्वं वहसीति ।

उपदेशस्तु क्षुद्राणां केषांचन पोषणेन महद्भिरनाश्रीयमाणोऽपि नीचः " अहं जनाश्रयः " इति गर्वभत इति ।

अत्र व्याजस्तुतिः अप्रस्तुतप्रशंसया सङ्कीर्यते ।

५०

अथ विषफलभरितं किंपाकवृक्षमपदिश्याह—

स्निग्धश्यामलकोमलं दलमतिप्रच्छायशीतं तलं
भूपर्यन्तविलम्बिजम्भलफलस्थूलं च वृत्तं फलम् ।
संपश्यन् विजने वने व्यवसितस्तत्रैव वस्तुं सुखं
पान्थः पान्थमुखाद् विषद्रुममुं दैवादवेत्य द्रुतः ॥

The leaves are resplendent, blue-black (in colour) and tender. The ground underneath has very dense shade and is cool. The round fruit which are as big as the lemons, are hanging, reaching the ground. Seeing (all this in a tree) in the solitary jungle, the traveller decided to live there itself comfortably. Fortunately, he came to know that it was a venomous tree through other travellers and fled from there.

कश्चन पथिकः विजने वने सञ्चरन् कमपि वृक्षं ददर्श। कीदृशः स वृक्षः? स्निग्धश्यामलकोमलं दलम्। तस्य पर्णानि तैलाक्तानीव मसृणानि, श्यामलवर्णानि, मृदुलानि च आसन्। अतिप्रच्छायशीतं तलम्। प्रकृष्टा छाया प्रच्छायम्। (छाया बाहुल्ये इति नपुंसकत्वम्) अतिप्रच्छायेन शीतलं तलं च वर्तते। अपि च फलं भूपर्यन्तविलम्बि वृत्तं जम्भलफलस्थूलं च। फलमिति जात्येकवचनम्। तस्य फलानि भूमिपर्यन्तं विलम्बन्ते वृत्तानिच। जम्भीरफलवत् स्थूलानि चेत्यर्थः। (जम्बीरे जम्भको दन्तशठो जम्भीरजम्भलौ इति वैजयन्ती) पान्थः विजने वने संपश्यन् तत्रैव सुखं वस्तुं व्यवसितः। पन्थानं नित्यं गच्छतीति पान्थः। (पन्थो ण नित्यम्) तथा च गमनेन परिश्रान्तः कश्चन पथिकः निर्जने कानने पूर्वोक्तगुणसंशोभितं वृक्षं दृष्ट्वा तत्रैव निश्चिन्तं वर्तितुं प्रयत्नशीलोऽभूत्। दैवात् पान्थमुखात् विषद्रुममसुमवेत्य द्रुतः। अन्ये पान्था ऊचुः "अयि भोः, असौ न साधारणो वृक्षः, अपि तु किंपाकाख्यो विषवृक्षः इति। तत एव तत्स्वभावं ज्ञात्वा स पान्थः ततो दूरमभिदुद्राव।

एवं विषवृक्षमपदिश्य दुष्टान्तःकरणं कमपि पण्डित-मुद्दिशति। तस्य हि मुखं सदा प्रसन्नं, वचांसि च मृदूनि परिणामे तु तान्येव विपज्जनकानि। तत्त्वमज्ञात्वा

श्रवणमधुराणि च। तत्सविधे गच्छन् कोऽपि जिज्ञासुः तद्रहस्यज्ञैः सुदैवान्निवार्यते— इति।

उपदेशस्तु बाह्यैर्लक्षणैः कस्यापि विषये न विश्वासः कर्तव्यः, परिचयवतां चोपदेशः तत्वज्ञाने प्रमाणीकरणीयः। तादृश उपदेशः दैवानुग्रहेण लभ्यत—इति

५१

अथ सर्वथा अक्षोभ्यं समुद्रमपदिश्याह—

वर्षन्त्वम्बुमुचस्तपन्तु तपना मथ्नन्तु देवासुरा
बध्नन्तु प्लवगाः पतन्तु सरितो गङ्गादिमाः सर्वतः।
पुष्णातूत्पलबान्धवः प्रतिनिशं मुष्णातु वा वाडवो
नाब्धिः क्षुभ्यति न प्रसीदति ततो न क्षीयते नैधते॥

Let the clouds rain. Let the suns blaze. Let the gods and demons churn. Let the monkeys build (bridges). Let rivers like the Ganga enter. Let the moon wax every night. Let also the submarine fire rob (the ocean of its water). The ocean is neither perturbed nor pleased as a result of any of these. Also it neither diminishes nor grows (in sixe).

अम्बुमुचः वर्षन्तु। मेघाः प्रकामं जलं समुद्रे वर्षन्तु नाम। तपनाः तपन्तु। द्वादश आदित्याः स्वैरं

ज्वलन्तु । देवासुराः मथ्नन्तु । देवता राक्षसाश्च एकीभूय मन्थरादिशैलसाहाय्येन विलोडयन्तु । प्लवगाः बध्नन्तु । कपयः सेतुबन्धादिकं कुर्वन्तु यथेच्छम् । गङ्गादिमाः सरितः सर्वतः पतन्तु । आदौ भवा आदिमा । (अग्रादिपश्चाड्डिमच्) गङ्गा आदिमा यासां ताः नद्यः सर्वाभ्यो दिग्भ्यः समुद्रं प्रविशन्तु । उत्पलबान्धवः प्रतिनिशं पुष्णातु । कुमुदानां बन्धुः चन्द्रः प्रतिरात्रि वृद्धिं गच्छतु । वा वाडवो मुष्णातु । अथवा वडवाग्निः समुद्रस्य अपः शोषणेन चोरयतु । एवं सर्वेषु तथा तथा प्रवर्तमानेष्वपि, अब्धिः न क्षुभ्यति । सागरः क्षोभं न प्राप्नोति । न प्रसीदति । नापि प्रसन्नो भवति । न क्षीयते । क्षीणो न भवति । नैधते । नापि वर्धते । मेघवर्षणसरित्पतनचन्द्रोदयाः प्रसादस्य वृद्धेर्वा, मथनसेतु-बन्धौ क्षोभस्य, सूर्यतापवडवाग्नी क्षयस्य च कारणतां प्रयान्ति । सत्स्वपि तेषु कस्यापि विकारस्य भाजनं न भवति सरस्वान्—इत्यर्थः ।

एवं समुद्रमपदिश्य कमपि दृढहृदयं सत्पुरुषमुद्दिशति । धनेषु आगच्छत्सु, शत्रुषु बाधमानेषु, जनेषु विविधमुपकारं स्वस्मात् प्राप्नुवत्सु, चिन्तादिषु हृदयं दहत्सु, पुत्रादिषु वर्धमानेषु च स सत्पुरुषः सदा गम्भीर एव भवति, न कदापि विकरोति—इति ।

उपदेशस्तु सत्पुरुषाः सर्वास्ववस्थासु समानशीलाः, किमपि तान् न विकारयति इति ।

५१

अथ समुद्रमेवापदिश्य प्रकारान्तरेण स्तौति—

वापीकूपतडागपल्वलसरःस्रोतस्विनीसारणी-
तोयाभ्युद्गमनिर्झरह्रदजलाधारोदपानप्रपाः ।
सम्पन्ना उपजीव्य यस्य विभवं साक्षात्प्रणाल्यापि वा
तस्मै जीवनजीवनाय सरितामीशाय तुभ्यं नमः ॥

Salutation to you, the lord of rivers and the enlivener of all living beings, depending on whose wealth either directly or through some channel, all wells, pools, tanks, puddles, lakes, rivers, canals, springs, cascades, ponds, reservoirs, cisterns and watersheds become full.

तस्मै तुभ्यं नमः । तादृशाय ते मम प्रणामाः सन्तु । कीदृशाय ? सरितामीशाय । नदीनां पत्ये । पुनः कीदृशाय ? जीवनजीवनाय । सर्वेषां प्राणिनां प्राणदात्रे । अथवा जीवनं जीवनं यस्येति बहुव्रीहिः । जलप्राणायेत्यर्थः । (जीवनं भुवनं वनम्—इति जलपर्यायेष्वमरसिंहः) पुनः कथंभूताय ? यस्य विभवं साक्षात्

प्रणाल्यापि वा उपजीव्य वापी ........ प्रपाः सम्पन्नाः । यस्य तव सम्पदं साक्षाद् वा केनचिद् द्वारेण वा अवलम्ब्य वाप्यादयः सम्पूर्णा भवन्ति ।

तत्र वापी नाम सोपानवती दीर्घिकापरनामा । कूपस्तु सोपानरहितः रज्जुसाहाय्येन यस्माज्जलं स्वीक्रियते । तडागो नाम अल्पसरिता यत्र भित्तिबन्धविधानेन जलं रक्ष्यते । पल्वलं च यत्र भूमौ स्वाभाविके गर्ते जलं तिष्ठति । सरस्तादृशमेव प्रायो महत् बहुजलाश्रयस्थानं, स्रोतस्विनी नदी, सारणी कृत्रिमा ग्रामादिभ्यो जलप्रापणाय निर्मिता कुल्या, तोयाभ्युद्गमः भूमौ स्वयं यत्र जलमुद्गच्छति, निर्झरो झरापरपर्यायः यत्र उच्चलज्जलं दृश्यते, ह्रदः अगाधजलः नैसर्गिको जलाशयः, जलाधारः तादृश एव मनुष्यनिर्मितः, उदपानं नाम आहावः कूपस्य समीपे निर्मितः यस्मात् गवादयो मनुष्या वा जलं लभन्ते । प्रपा च पान्थार्थं निर्मिता पानीयशालिका—इत्याहुः ।

एवं समुद्रमपदिश्य बहूनां जीविकाप्रदातारं कमपि महात्मानमुद्दिशति । तस्माद्धि साक्षात्, कयापि प्रणाल्या वा जना जीवनं प्राप्य सम्पन्ना भवन्ति ।

उपदेशस्तु बहूनां यो जीवनाधारः, स सर्वलोकनमस्कार्य इति ।

वचनान्तरैः समुद्रस्य अक्षोभ्यत्वमेवाश्रित्य वर्णयति—

न ह्युष्णो न च शीतलो जलनिधिर्लब्धप्रतिष्ठोऽपि सन्
कस्त्वस्याः प्रकृतेरमुं चलयितुं शक्तस्त्रिलोकेष्वपि ।
अद्यापि ज्वलतान्तरेव विहितं किं तावदौर्वाग्निना ?
सायं सायमुदित्वरेण शशिना तत्रैव वा किं कृतम् ?

The ocean is neither hot (insolent) nor cold (humble) in spite of the fact that it has gained a firm basis (or glory). Who in the three worlds is able to move it away from this nature? What has been achieved by the submarine fire which is burning inside even now? Or, what has been accomplished by the moon who rises every evening?

जलनिधिः लब्धप्रतिष्ठस्सन्नपि न हि उष्णः, न च शीतलः । समुद्रः अवाप्तदृढस्थितिः प्राप्तमाहात्म्यश्च । (प्रतिष्ठे स्थितिमाहात्म्ये इति वैजयन्ती) तथापि स न च उष्णो भवति, न च शीतो भवति । अत्र उष्णशीतशब्दाभ्यां गर्वदैन्ये च लक्ष्येते । सदा समानप्रकृतिरसाविति भावः । अमुमस्याः प्रकृतेः चलयितुं त्रिलोके-

ष्वपि कः शक्तः ? असात स्वभावादेतं समुद्रं भ्रंशयितुं त्रिष्वपि भुवनेषु कस्समर्थः ? न कश्चिदिति यावत्। तत् कथं ज्ञातमित्यत्र दृष्टान्तमाह—अद्यापि अन्तरेव ज्वलता और्वाग्निना किं तावद् विहितम्? अनादेः कालात् अद्ययावत् दीप्यमानेन बाडवेन वह्निना किं वा साधितम्? न किमपि। समुद्रे ऊष्मणः अदर्शनात्। सायं सायमुदित्वरेण शशिना वा किं कृतम्? उदेति तच्छीलः इति उदित्वरः। (इण्नशिजिसर्तिभ्यः क्वरप्) सायं सायमपि उदय प्राप्नुवतापि चन्द्रेण किं वा साधितम्? न किमपि। समुद्रस्य शीतलताधिक्याभावात्। तस्मात् समुद्रं तत्प्रकृतेः च्यावयितुं न कश्चित् शक्त इति भावः।

एवं समुद्रमपदिश्य गाम्भीर्याश्रयं कमपि महात्मानमुद्दिशति। सम्पदः तं न गर्विणं कुर्वन्ति, विपदः तं दीनमपि न विदधति। प्रतिदिनं तस्य हृदयं दहन् संसारक्लेशः न तस्य प्रह्वीभावं जनयति। प्रतिदिनं वर्धमानो धनागमोऽपि तस्य गर्वं न समुत्पादयति। स सदा समानशीलः इति।

उपदेशस्तु महता केनापि कारणेन स्वनिसर्गात् च्युतिर्न भवतीति।

अथ समुद्रमेवापदिश्य सोऽपि कालस्य वशंवद एवेति वदति—

राजा विप्रकुलस्य यस्य तनयः सोमः स वारांनिधेः
यः सर्वाश्रयणीयपादकमलस्तस्याश्रयोऽयं हरेः ।
आनीतश्चुलुकं स एव चलुकेऽप्यन्तःप्रवेश्येत चेत्
कः संवेदितुमीहते भगवतः कालस्य लीलायितम् ॥

The moon, who is the King of the dynasty of Brahmans, is the son of the ocean. It (the ocean) is also the dwelling of Lord Vishnu, whose lotus feet is adored by one and all. If that very ocean, could be made to stay in the hollow of the palm (by sage Agastya), and was also confined in a small pot, who is able to know the amusements of Lord Time?

सः विप्रकुलस्य राजा सोमः वारांनिधेः तनयः । प्रसिद्धः द्विजराजः चन्द्रः समुद्रस्य सुतः । यः सर्वाश्रयणीयपादकमलः, तस्य हरेः अयमाश्रयः । यो विष्णुः सकललोकवन्द्यमानचरणारविन्दः, तस्यापि असौ समुद्रः आश्रयः । यस्यैवं यश्चैवं, स समुद्रः चुलुकमानीतः । मुनिना अगस्त्येन चुलुके स्वीकृतः वारांनिधिरिति पौराणिकी

कथात्रानुसन्धेया। स एव चलुकेऽप्यन्तः प्रवेश्येत चेत्। चलुकं नाम पात्रविशेषः। तत्र तपःप्रभावेन सर्वः समुद्रः अन्तर्गतः क्रियेत चेत्, तर्हि भगवतः कालस्य लीलायितं कः संवेदितुमीहते? को वा सर्वशक्तस्य कालस्य लीलाविनोदं ज्ञातुं प्रभवति? न कश्चिदिति भावः।

एवं समुद्रमपदिश्य कस्यापि महात्मनः विचारमुद्दिशति। श्रेष्ठं सुतं, लोकवन्द्यं जामातरं च प्राप्यापि स केनाप्यन्येन लीलया वशीक्रियत इति।

उपदेशस्तु सर्वशक्तस्य कालस्य पुरस्तात् न कस्यापि स्थैर्यं शाश्वतत्वं वा विश्वसनीयम्—इति।

५५

अथ पुनः क्षीरसमुद्रमेवापदिश्याह—

दुग्धं स्वादु रसादपीह मधुनो दग्धं विषैर्वासुकेः
संवर्तव्रतसाक्षिणो जलचरा मन्थाद्रिणा मारिताः।
प्राणेभ्योऽप्यधिकाः सुरद्रुममुखाः प्राप्ताः समस्ता व्ययं
किञ्चिद्रक्षितुमिच्छतामृतमिह क्षीराब्धिना नाशितम्॥

The milk, which was sweeter than the essence of honey, was burnt by the venoms of the serpent Vasuki. The aquatic animals, who were the witnes-

ses of even the ceremony of the annihilation of the word, were killed by the churning mountain (Mandara). The divine tree (Kalpavruksha) etc., which were dearer than life, were all spent. All this was lost by the milk ocean (during the churning by gods and demons) simply because he wanted to save some ambrosia.

देवासुराः अमृतलाभाय वासुकिं रज्जुं कृत्वा, मन्दरपर्वतं च मन्थानं विधाय क्षीरसागरं ममन्थुः किल। तदा मधुनो रसादपि स्वादु दुग्धं वासुकेः विषैः दग्धम्। मकरन्दस्य सारादपि मधुरतरं क्षीरं वासुकेः फणाभ्यः निर्गताभिः विषज्वालाभिः दग्धमभूत्। संवर्तव्रतसाक्षिणो जलचराः मन्थाद्रिणा मारिताः। मन्थतामापन्नेन वेगेन परिभ्राम्यता शैलेन मन्दरेण प्रलयकालेऽपि सकलं जगद्विनाशं साक्षात् दृष्टवन्तः तिमिङ्गिलादयो महामत्स्या अपि निहताः। प्राणेभ्योऽप्यधिकाः सुरद्रुममुखाः समस्ताः व्ययं प्राप्ताः। जीवितादपि प्रियतराः कल्पवृक्षैरावतादयः पदार्थाः सर्वेऽपि कस्य कस्यापि देवस्य वशमापन्नाः। एतत्सर्वं कस्मादभूदित्याह—किञ्चिदमृतं रक्षितुमिच्छता क्षीराब्धिना नाशितम्। यदि क्षीरसागरः स्वयं प्रथममममृतमार्पयिष्यत्, तर्हि कल्पवृक्षादयो नष्टा नाभविष्यन्।

अमृतं रिरक्षिषुः न केवलममृतम्, अपि तु सर्वस्वं व्यनाशयदिति ।

एवं क्षीराब्धिमपदिश्य कमपि श्रीमन्तमुद्दिशति । धनं किञ्चिद् रक्षितुमिच्छता धनिना गृहं वह्निवशं कार्यते, प्रेष्ठाः पुत्रमित्रकलत्रादयो मार्यन्ते, सर्वस्वमपि नाश्यते, धनमपि नावशिष्यते—इति ।

उपदेशस्तु बलवद्भिः प्रयाचितस्य स्वयं प्रदानमुचितम् इतरथा न केवलं तत्, अपि तु सर्वस्वमपि तैः ह्रियत इति ।

५६

अथ समुद्रमेवापदिश्य प्रकारान्तरेण वर्णयति—

लब्धा श्रीर्मुरवैरिणा पुरभिदा लब्धः स्वयं चन्द्रमा
देवैरप्सरसो मणिद्विपहयास्तत्स्वामिनैवाहृताः ।
एकस्मै स्वयमेकमेव वितरत्येतेषु चेत् सागरः
त्रैलोक्यं वशयेत् जडस्तु स वृथा विक्रम्य तैर्लुण्ठितः ॥

Goddess Lakshmi was obtained by the enemy of Mura (i e. Vishnu), the moon by Shiva, the nymphs by the gods and the gems, elephants and horses by their lord (Indra). If the ocean had himself given away even one of these things to any one (of the above recepients), he could have owned

the three worlds. Being a fool, he tried in vain to be chivolrous and was robbed completely by them.

समुद्रमथनानन्तरं, श्रीः मुरवैरिणा लब्धा । सागरस्य कन्यका लक्ष्मीः विष्णुना प्राप्ता । पुरभिदा स्वयं चन्द्रमा लब्धः । त्रयाणां पुराणां भेदकेन शिवेन साक्षात् चन्द्रः प्राप्तः । देवैः अप्सरसः लब्धाः । रम्भादयः स्वर्वेश्याः दिवौकोभिः स्वीकृताः । तत्स्वामिनैव मणिद्विपहयाः आहृताः । तेषां देवानां प्रभुणा इन्द्रेणैव चिन्तामणिः, ऐरावतः उच्चैःश्रवाः इति प्रख्याताः नीताः । इत्थं भूयांसि वस्तूनि एकैकेनापि हृतानि । सागरः स्वयमेतेषु एकस्मै एकमेव वितरति चेत्, त्रैलोक्यं वशयेत् । विष्णुना वा शिवेन वा पूर्वमेव "इदं तुभ्यं दास्यामि मामन्येभ्यः त्रायस्व" इति यदि सागरः सन्दधीत, तर्हि न केवलमात्मानं रक्षेत्, अपि तु त्रिलोक्याः प्रभुरपि भवेत् । जडः स तु वृथा विक्रम्य तैर्लुण्ठितः । डलयोरभेदात् जलधिः जडधिरपि भवति । तस्मादेव स व्यर्थं साहसं कृत्वा तान् निरोद्धुं प्रायतत । अत एव तैर्लुण्ठितः । तैः बलात्कारेण तस्य सर्वस्वमपि अपहृतम् ।

एवं क्षीरसागरमपदिश्य कमपि कृपणं धनिकमुद्दिशति । स धनिको राज्ञे अधिकारिभ्यश्च यद्देयं तत् स्वयं न प्रददाति । अत एव तैः पूर्णतया लुण्ठ्यते इति ।

उपदेशस्तु बलवत्सु बहुषु किमपि प्रयाचमानेषु, तत्र यस्मै कस्मायापि किमपि दत्त्वा सन्धानं कर्तव्यम् । यदि मिथ्याविक्रम आश्रीयते, सर्वस्वमपि तैः हरिष्यते —इति।

५७

अथ समुद्रमपदिश्य कन्यापितृत्वस्य कष्टं वर्णयति—

कत्यश्वाः कति धेनवः कति गजाः कत्यद्भुताः पादपाः
सुन्दर्यः कति सुभ्रुवः कति महारत्नान्यनर्घाण्यपि ।
जातैका किल कन्यका जलनिधेर्दातुं प्रसक्ता यदा
सर्वं तद्व्ययितं तदा परिणतौ नामैकमुच्छेषितम् ॥

How many horses? How many cows? How many elephants? How many glorious trees? How many were the beautiful damsels with pretty brows? How many were also the invaluable gems (that the ocean had)? Well, only one daughter (Lakshmi) was born to the ocean and when she was given away (in marriage), all that (wealth) had to be spent. At the end, only the name (of the ocean) remained.

क्षीरसागरे मन्थनात् प्राक् स्थितां सम्पदं गणयामश्चेत्, अश्वाः कति? उच्चैःश्रवआदयो हयाः असंख्याताः। धेनवः कति? कामधेनुप्रभृतयो दिव्या गावोऽपि गणना-

तीताः । एवमेव कति गजाः कति च अद्भुताः पादपाः ? ऐरावतादीनां गजानां कल्पवृक्षादीनां महीरुहाणां च गणनां को वा जानाति ? सुभ्रुवः सुन्दर्यः कति ? शोभनाः भ्रुवः यासां ताः सुभ्रुवः । तादृश्यः सुन्दर्यः तदूर्ध्वं अप्सरस इति ख्याताः रम्भाद्याः कति ? अनर्घाणि महारत्नानि कति ? चिन्तामण्यादीनि महान्ति रत्नानि च कति ? एषां सर्वेषां निधिरासीत् समुद्रः, अत एव रत्नाकर इति च तस्य नाम अभूत् । परन्तु एका कन्यका जाता किल । तस्य समुद्रस्य एका सुता लक्ष्मीः सम्भूता खलु । सा दातुं यदा प्रसक्ता तदा तत्सर्वं व्ययितम् । यदा तां परिणाययितुं तत्पिता प्रायतत, तदा सर्वा सा रत्नादिः सम्पत् व्ययिता अभूत् । परिणतौ नामैकमुच्छेषितम् । परिणामे एकं नामैव रत्नाकर इत्यवशिष्टम् । नान्यत् किमपि ।

एवं समुद्रमपदिश्य कमपि श्रीमन्तं कन्यापितरमुद्दिशति । कन्यायां विवाहे योग्याय वराय दीयमानायां सर्वा श्रीः व्ययिता बभूव इति ।

उपदेशस्तु महत्यपि सम्पत् कन्यानां विवाहसमये व्ययीभवति—इति ।

अथ समुद्रमितरजलाधारांश्चापदिश्याह—

प्रागभ्यागतया किलाभ्रसरिता संप्लावयन्त्या मही-
मम्भोधिः स्वयमप्यपूर्यत सकृत्तत्तज्जलाधारवत् ।
आस्तेऽयं कथमक्षयो निधिरपां ते ते कथं वासते
निर्व्याजाम्बुधराम्बुदानसुकृतं सिद्धं तदित्थं पुनः ॥

By the divine river that came long ago (without warning) and flooded the earth, the sea was also filled once like many other reservoirs. How is that this (ocean) remains an inexhaustible store-house of water while the others are (otherwise)? The merit (acquired by the ocean) for the candid gift of water to the clouds, has resulted in this (abundance)

अभ्रसरित् प्राक् अभ्यागता किल । गङ्गा भगीरथेन प्रार्थिता सती भुवं प्रत्याजगाम ननु । तया महीं सम्प्लावयन्त्या अम्भोधिरपि स्वयमपूर्यत । महता सम्भ्रमेण भुवं प्रत्यायान्ती स्वर्णदी सर्वां भूमिमेव सम्प्लावयन्तीव आस्त । तया सगरस्य पुत्रैः भूमौ कृतं बिलमपूर्यत । ततश्च सागर उदपद्यत । एवं गङ्गया जलपूरणं किं सागरस्यैव । नेत्याह । तत्तज्जलाधारवत् । ते ते

वापीकूपतटाकादयः यथा अपूर्यन्त तथैव सागरोऽपि। तथा च समानं पूर्णत्वं समेषां जलाशयानां गङ्गया साधितम्। तदपि सकृत्। एकवारमेव। न हि पुनः पुनः सागरपूरणं गङ्गया व्यधायि। एवमपि, अयं कथमपामक्षयो निधिः आस्ते? असौ समुद्रः कथङ्कारं वा अव्ययजलस्य आश्रयोऽवतिष्ठते? ते वा ते कथमासते? ते पूर्वोक्ता वापीकूपतटाकादयः, ते नाम तादृशाः शुष्काः कथं जायन्ते? समानेऽपि पूरणे कथमिवैकत्र सर्वदा पूर्णत्वम्, अपरत्र च मध्ये मध्ये शुष्कता? तत्राह—

निर्व्याजाम्बुधराम्बुदानसुकृतं पुनः इत्थं सिद्धम्। सर्वेभ्यः अम्बुधरेभ्यः प्रत्युपकाराशां विना समुद्रः अम्बु प्रददाति खलु। तस्य दानस्य पुण्यमनेन प्रकारेण फलितम्। अन्यैः तदा दानाकरणात्, तैः रिक्तैः भूयते।

एवं समुद्रमपदिश्य सर्वान् विद्यावत उद्दिशति। समानायामेव विद्यायां बहुभिः प्राप्तायां, यो विद्यामन्येभ्यः प्रददाति तस्य ज्ञानं सदा पूर्णमवस्थास्यते, यस्तु विद्यां निगूहयति, तस्य बुद्धिः विद्याशून्या भविष्यतीति।

उपदेशस्तु विद्यारूपं धनं व्ययतो वृद्धिमायाति, क्षयमायाति संचयात्, तस्मात् विद्यादीनां प्रकामं प्रदानमेव युज्यते, न तु निगूहनम्—इति।

अथ मेघशीकरव्रतान् चातकानपदिश्याह—

खातं शीतलवारि वारिदकुलश्यामाभिरामद्रुमं
पान्थश्रान्तिहरं सरः पथि, हृतं दुर्भिक्षमप्यम्भसाम् ।
ये त्वेते भुवि चातका इति कदाप्यज्ञातभौमोदकाः
ते गृह्णन्ति न चेदिहाम्बु किमतो दैवेन ते वञ्चिताः ॥

A pond has been dug near the path. It (is full of) cool water and is (surrounded by) fine trees which look like a multitude of clouds. (The pond) is (capable of) eliminating the strain of the travellers. The scarcity of water has been eradicated. But, these chataka birds, which never even think of the earthen water, do not take any water from the pond. What of that ? (we can only say that) they are deceived by their own fate.

पथि सरः खातम् । मार्गे कश्चन कासारो निर्मितः । कीदृशं तत्सर इत्याह—शीतलवारि । शीतलानि वारीणि यस्मिंस्तत् । अपि च, वारिदकुलश्यामाभिराम-द्रुमम् । वारि ददतीति वारिदा मेघाः । तेषां कुलं नाम समूहः । तद्दिव श्यामा वारिदकुलश्यामाः । ते

च अभिरामाश्च द्रुमाः यस्मिन् तत् वारिदकुलश्यामाभिरामद्रुमम्। मेघसमूहवत् श्यामवर्णैः सुन्दरैः द्रुमैः परितः शोभितं तत्सर इत्यर्थः। अपि च, पान्थश्रान्तिहरम्। पथिकानां श्रमापहर्तृ। तादृशस्य सरसः खननेन किं साधितमित्याह—अम्भसां दुर्भिक्षं हृतम्। भिक्षाणामभावो दुर्भिक्षम्। (अव्ययं विभक्ति....इत्यादिना अर्थाभावे अव्ययीभावः) जलाभावः निरस्त इति यावत्। ये त्वेते चातकाः भुवि सन्ति, ते कदाप्यज्ञातभौमोदकाः। भूमौ भवं भौमम्। तादृशमुदकं ते कदापि मनसापि न स्पृशन्ति। अत एव, इह सरसि ते अम्बु न गृह्णन्ति। किमतः? दैवेन ते वञ्चिताः। भाग्येन ते प्रतारिताः। न खलु सरसः कापि हानिर्भवत्येतेन। तादृशस्वभावकारिणा स्वदैवेन ते चातका एव वञ्चिता इति वक्तव्यमित्यर्थः।

एवं चातकमपदिश्य प्रतिग्रहमकुर्वाणं ब्राह्मणमुद्दिशति। राज्ञि बहुविधं दानं कर्तुं सिद्धेऽपि, भूयस्सु जनेषु तस्मात् स्वीकृत्य सन्तुष्टेष्वपि अपरिग्रहव्रतोऽसौ किमपि न गृह्णातीति।

उपदेशस्तु स्वभावेन तत्त्वनिष्ठाः कदापि तत्त्वं न मुञ्चन्ति। विधिमन्तरा तत्र किमपि कारणं न वर्तत इति।

९०

अथ चातकमेवापदिश्य प्रकारान्तरेणाह—

भूमिष्ठा अतिपावनीः सुरभिलाः स्वाद्वीरपः संत्यजन्

याचत्यम्बुदमम्बु चातकगणो यत्तेन किं साध्यते ।

किं तस्मै द्विगुणं प्रवर्षति घनः ? किं वा तपः साध्यते ?

प्राग्जन्मन्यवितीर्णवारिकणिकः पापी स इत्यूह्यते ॥

The group of chataka birds begs the cloud for water despising the water on the earth which is sacred, fragrant and sweet. What is (after all) accomplished by this ? Does the cloud rain doubly for him ? Or, is it that the (result of) penance is achieved (in this manner by the group of these birds) ? Not at all. Only it is imagined that the chataka bird is a sinner that did not give any water (to the thirsty) in his previous birth.

चातकगणः अम्बुदमम्बु याचते । चातकाख्यानां पक्षिणां समूहो मेघं जलमर्थयते । को वा तत्र विशेष इत्याह—भूमिष्ठाः अपः सन्त्यजन्—इति । भूमौ विद्यमानं जलं परित्यज्य ते खगाः तथा कुर्वन्तीत्यर्थः । कीदृशीरपः ? अतिपावनीः । अतीव पवित्राः । गङ्गादीनां

नदीनां जलं हि पापनाशकत्वेन शास्त्रेषु वर्ण्यते। अपि च, सुरभिलाः। सौगन्ध्यशालिनीः। अपि च स्वाद्वीः। मधुराः इति यावत्। एवं च पावित्र्यसौरभ्यमाधुर्य-रूपगुणत्रययुक्तं मृमिष्ठं वारि परित्यज्य चातका अलभ्याय वारिणे सततं मेघं प्रार्थयन्ते। किं तस्मै घनो द्विगुणं प्रवर्षति? द्विवारं वर्षति किं मेघः चातकार्थम्? नैव। किं वा तपः साध्यते? सततध्यानपरतया मुनिभिरिव चातकैः किं तपस्साधनं क्रियते? नैव! तर्हि किं फलम्? सः प्राग्जन्मनि अवतीर्णवारिकणिकः पापी इति ऊह्यते। अयं चातकः पूर्वस्मिन् जनुषि वारिणः कणिकामपि तृषितेभ्यो न प्रादात्। अत एव अधुना जलबिन्दुमपि पातुं न शक्नोति-इति तर्क्यते।

एवं चातकमपदिश्य डम्भाचारेण लोके किमपि अभक्षयन्तं ब्राह्मणब्रुवमुद्दिशति। स यत् सुलभमपि प्रयतमपि स्वाद्वपि अन्नं न भक्षयति, तेन न किमपि पुण्यं साध्यते। पूर्वस्मिन् जन्मनि स कस्मायपि अन्नदानं न कृतवान् इति तु ज्ञायते—इति।

उपदेशस्तु व्रतादिनाम्ना व्यर्थं शरीरशोषणं न मति-मद्भिः कार्यमिति।

अथ वनस्थं कमपि वृक्षमपदिश्याह—

स्वादून्येव फलानि सन्ति सुरभीण्येव प्रसूनानि च
स्वान्तं चाप्युपकर्तुमर्हति जने, साध्यं वनस्थेन किम् ?
भाग्यं ह्येतदतर्कितं वनतरोः पान्थो यदा तापसः
छायामस्य यदृच्छया फलवतीमध्यास्त गन्धोत्तराम् ॥

The fruit are sweet, the flowers are fragrant and the mind (of the tree) wants also to help the people worthy of worship. But, what can (the tree), standing in a jungle, do? It was only an unexpected luck for that forest-tree that a traveller, (especially) a sage, sat in its shade, which was abundant in fruit and aroma.

वनस्थस्य तरोरवस्थां वर्णयति—फलानि स्वादूनि एव। मधुराण्येव। प्रसूनानि च सुरभीण्येव। कुसुमानि च सुगन्धीनि सन्ति। अर्हति जने उपकर्तुं स्वान्तं च भवति। पूज्यानां जनानामुपकाराय हृदयं सदा सिद्धं वर्तते। तथापि, वनस्थेन किं साध्यम्? विजने दुर्गमे कानने स्थितेन तरुणा किं कर्तुं शक्यते? यदा तापसः पान्थः यदृच्छया अस्य छायामध्यास्त, एतद् अतर्कितं

भाग्यं वनतरोः। तपोनिष्ठः कोऽप्यरण्यमागतः पथिकः अस्य काननतरोः छायामाश्रितवान्। एतदचिन्तितं भाग्यमेव। विरला हि तस्मिन् मार्गे पथिकाः। कीदृशीं छायामित्याह—फलवतीं गन्धोत्तरामिति च। तस्यां छायायामुपविष्टो हि फलानि लब्धुं शक्ष्यति। सुरभि-कुसुमशालित्वात् तस्य तरोः सुगन्धिर्मारुतो वाति च। एवं च वनतरोः भाग्यविशेषकारणकं तत्पान्थागमनमित्यर्थः।

एवं वनतरुमपदिश्य कस्मिन्नपि कुग्रामे वसतिं कृतवन्त-मुदारं कमप्युद्दिशति। तस्य गृहं धनेन धान्येन च समृद्धम्। अतिथीनां सत्कारे तस्य मनोऽपि वर्तते तथापि तं कुग्रामं प्रति न कोऽपि आयाति। कदाचि कोऽपि पथिकः तत्रागत इति तस्य भाग्यपरिपाक एवेति

अथवा दूरे देशे स्थितः शास्त्रविद्याधनः कोऽपि पण्डित उद्दिश्यते। तस्माद् विद्यां ग्रहीतुं शिष्या नायान्ति। कदाचित् कोऽपि योग्यः शिष्यो लब्ध इति तस्य भाग्यं परिपक्वमित्येव स मन्यत इति।

उपदेशस्तु दातुं स्वान्ते इच्छत्यपि लोके सत्पात्रं कादाचित्कतयैव लभ्यत इति।

६२

अथ द्विविधान् वृक्षानपदिश्य वदति—

पान्थेषु व्ययितं फलं पथिषु यैर्नम्रैः सदा पादपैः
यैरप्युन्नतमौलिगोपितफलैः कोणे निलीय स्थितम्।

दावेन ज्वलता द्वयेऽपि खलु ते निःशेषिताः साम्प्रतं
पुण्यं पापमिति स्थितं द्वयमिदं तेषां द्वयानां पृथक् ॥

The trees by which their fruits were distributed among the travellers on the roads bowing down their heads (obediently) and also the other trees who stood hideously in some corner concealing their fruit in their lofty heads, both were reduced to ashes by the raging forest fire. Now, what remains of those two categories of trees is merit or sin alone.

कैश्चित् पादपैः पथिषु सदा नम्रैः भूत्वा पान्थेषु फलं-व्ययितम् । पादैः पिबन्तीति पादपा वृक्षाः । तैः फलभारेण नम्रैः श्रान्तानां पान्थानां निवहे फलानि वितीर्णानि । अन्यैः कैश्चित् पादपैः उन्नतमौलिगोपित-फलैः कोणे निलीय स्थितम् । अत्युन्नते अग्रभागे फलानि गोपायित्वा क्वापि कोणे गूढैः स्थितम् । एवं च तेषामेक-मपि फलं नावशिष्टम् । ज्वलता दावेन द्वयेऽपि खलु ते निःशेषिताः । प्रदीप्यमानेन वन्येन वह्निना उभयेऽपि ते तरवः भस्मसात् कृताः । साम्प्रतं तु तेषां द्वयानां पृथक् पुण्यं पापमिति द्वयं स्थितम् । ये पादपा नम्रा दान-

शीलाश्च आसन्, तेषां पुण्यमवशिष्टम्। ये तु फलानि न्यगूहयन् तेषां पापमेवावशिष्टम्। नान्यत् किमपि।

एवं तरून् अपदिश्य सकलान् जनान् उद्दिशति नीलकण्ठः। ये श्रीमन्तः सन्तोऽपि नम्रा भूत्वा दानशीला भवन्ति, येऽपि उन्नतमस्तका भूत्वा धनं निह्नुवते उभयेऽपि ते कालेन निःशेषतां नीयन्ते। आद्यानां पुण्यमवशिष्यते इतरेषां तु पापम्—इति।

उपदेशस्तु नम्रैः दानपरैः पुण्यमेवार्जनीयम्। उन्नत-मौलितया गर्वेण धनादिसंगोपनेन च पापमेवार्ज्यते। उभयथापि मरणं तु अनिवार्यम्। अतः मतिमद्भिः पुण्यसम्पादने प्रयत्नो विधेयः, न तु पापसंग्रहणे—इति।

६३

अथ उत्सन्नं पादपमपदिश्याह—

अध्वन्याः किल मूलगर्तमधुनाप्यापूरयन्त्यश्रुभिः
व्याक्रोशन्त्यधुना सबान्धवकुलाः सायं मुहूर्तं द्विजाः।
इत्थं यावदिमानि बिभ्रति शुचं भूतान्यपि त्वत्कृते
तावत्त्वं न गतोऽसि पादप, चिरं कीर्त्यात्मना वर्तसे॥

The voyagers are filling the hole (created by the removal) of your roots even now with tears. Even now, the birds cry for an instant in the evenings

with all their kith and kin. As long as these keep mourning you thus, O tree, you are not gone. You will remain here for a long time in the form of reputation.

अध्वानमलं गच्छन्तीति साधवः अध्वन्याः । पान्था इति यावत । ते अधुनापि मूलगर्तमश्रुभिः आपूरयन्ति । अद्यापि मार्गेणानेन प्रयान्तः "अत्र किल वृक्ष आसीत् । तस्य छायायां वयमुपाविशाम" इति प्रत्यभिजानन्तः, वृक्षस्य मूलानां स्थाने जातं गर्तमभिवीक्षमाणाः शोक-व्याकुलाः अश्रूणि विमुञ्चन्ति । तैः अश्रुभिः स गर्तः पूर्यते । अधुना सबान्धवकुलाः द्विजाः सायं मुहूर्तं व्याक्रोशन्ति । इदानीमपि बन्धुमित्रसहिताः पक्षिणः सायंकाले दुःखेन रुवन्ति ।

हे पादप, इमानि भूतान्यपि त्वत्कृते इत्थं शुचं यावद् बिभ्रति, तावत् त्वं न गतोऽसि । एते जन्तवः त्वद्विषये अनेन प्रकारेण शोकं यावत्पर्यन्तं दधति, तावत्पर्यन्तं त्वं न मृतोऽसि । (खादौ जन्तौ च भूतं क्ली–इति वैजयन्ती) शरीरे नष्टेऽपि अगतस्त्वं कथमित्याह—चिरं कीर्त्यात्मना वर्तसे इति । बहुकालं यशश्शरीरेण भवसीत्यर्थः । (आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि — इति वैजयन्ती)

एवं पादपमपदिश्य मृतं जनोपकारिणं कमपि महाभागमुद्दिशति । तस्मिन् मृतेऽपि अतिथयः तं संस्मरन्ति । आश्रिताः बहवः तद्गुणगानमधुनापि कुर्वन्ति अतः स कीर्तिकायः चिरं जीविष्यति—इति ।

उपदेशस्तु परोपकारशीलः, पार्थिवेन शरीरेण वियुक्तोऽपि विमलेन यशश्शरीरेण चिरं लोकेऽस्मिन् वर्तिष्यते—इति ।

६४

अथ वन्यान् तरूनपदिश्य वदति—

जायन्ते विजने बने क्षितिरुहो यद्यप्यमी दुर्भगाः
सर्वे ते वटुभिस्तथापि न तथा बोद्धुं क्षमास्तुल्यवत् ।
आक्रान्तेष्वपि तेषु केषुचिदतिक्रूरक्रियैः श्वापदैः
गृह्यन्ते कतिचिद्यतः शमधनैर्ब्रह्मर्षिभिः पावनैः ॥

All these ugly trees grow in the lonely forest. Nevertheless, it is not right for the "Vatus" (i.e. the young students of the hermitages) to think that they are all equal. While many of them are occupied by cruel beasts, some are picked by the great holy sages (for sacrificial use), whose wealth is the control of the senses (i.e penance.)

यद्यपि सर्वे अमी दुर्भगाः क्षितिरुहः विजने वने जायन्ते । सकलाः नयनोद्वेगजनकाः वृक्षाः निर्जने कानने रोहन्ति । तथापि वटुभिः तुल्यवत् बोद्धुं न क्षमाः । समानभूम्युत्पन्नत्वेऽपि तेषु तुल्यता बालैः ज्ञातुं न युज्यते । यतः तेषु केषुचित् अतिक्रूरक्रियैः श्वापदैः आक्रान्तेष्वपि, कतिचित् पावनैः ब्रह्मर्षिभि गृह्यन्ते । यद्यपि तेषां वृक्षाणां मध्ये कांश्चन वृक्षान् घातुका हिंस्राः जन्तवः आश्रयन्ति, तथापि अन्यान् कांश्चन ब्रह्मर्षय आश्रयन्ति । ते च ब्रह्मर्षयः पवित्राः, इन्द्रियनिग्रहशीलाश्च । शम एव हि तेषां धनम् । तथा च विरुद्धस्वभावैः श्वापद-ब्रह्मर्षिभिः समाश्रितत्वात् सर्वेषां वृक्षाणां समानत्वं वक्तुं न साम्प्रतम् इति ।

एव वृक्षानपदिश्य राज्ञो विविधानाधिकारिणः उद्दिशति । सर्वेषां राजधानीभवत्वेपि ' सर्वे ते समाना ' इति कथयितुं न शक्यते । केचन भयङ्करैः दोषैः आश्रिताः, अपरे प्रशस्यैः गुणैः । कः कस्याश्रय इति ज्ञात्वा तेषु तेषु तत्तद्व्यवहारः कार्य इति ।

उपदेशस्तु एकस्मिन्नेव स्थाने उत्पन्ना अपि पृथक्पृथक्-स्वभावा भवन्ति । तेषु तुल्यतादृष्टिः उत्तानबुद्ध्या न कर्तव्या—इति ।

अथ पुत्रजन्मनि भूयिष्ठं कष्टमनुभवन्तीं जननीमपदिश्याह—

निद्रालस्यशरीरसादवमनान्नद्वेषकासज्वर-

श्वासश्वितिमहिक्किकाप्रभृतयो मासेषु मातुर्ध्रुवाः ।

जातस्तत्क्षणमेव नश्यतु शतं वर्षाणि वा जीवतु

स्वर्गे वा पितरौ दधातु नरके वा पातयत्वञ्जसा ॥

Sleep, sloth, emaciation, vomitting, dislike for food, cough, fever, sighing, whiteness, (in the body), hiccough etc., are certain for the mother (before the birth of a son) for many months whether he dies the moment he is born or lives a hundred years; whether he maintains his parents in heaven (by means of rituals) or throws them into the hell (by not observing his religious duties).

अन्तर्वत्न्याः मातुः अवस्थाः कथयति । मासेषु नवसु मातुः जनिष्यमाणपुत्रायाः ध्रुवा इमे । के? निद्रा अतिस्वापः, आलस्य तन्द्रा, शरीरसादः देहक्षीणता, वमनं वान्तिः, अन्नद्वेषः आहारे अनासक्तिः, कासः कसनं, ज्वरः देहतापः, श्वासः दीर्घश्वसनं, श्वितिमा देहे शुक्लवर्णता,

हिक्किका हिक्का, इत्यादयः । तत्र को विशेष इत्याह— जातः तत्क्षणमेव नश्यतु । प्रसूतिक्षण एव पुत्रो म्रियताम् । वा शतं वर्षाणि जीवतु । अथवा पूर्णं पुरुषायुषं प्राणितु । उभयोरपि पक्षयोः मातुः कष्टमनिवार्यमेव । तथा, स्वर्गे पितरौ दधातु वा, अञ्जसा नरके पातयतु वा । धर्माचरणेन तर्पणादिना च स पुत्रः जनकौ स्वर्गे शाश्वतं स्थापयतु वा, कर्तव्यलोपेन अधर्माचरणेन च द्राक् तौ निरये अस्यतु वा । पक्षद्वयेऽपि पुत्रजननात् प्राक् मातुः क्लेशः विद्यत एव ।

एवं मातरमपदिश्य नूतनवस्त्वाविष्काराय प्रयतमानं वैज्ञानिकमुद्दिशति । महता क्लेशेन क्रियमाणः प्रयोगः कदाचिद् विफलः, कदाचित् सफलो वा भवेत् । कीर्तिं सम्पाद्य तं वैज्ञानिकं लोकेऽमरं कुर्यात् दुष्परिणामान् जनयित्वा दुर्यशोऽपि सम्पादयेत् । पूर्वतः क्लेशस्तु अनिवार्य एवेति ।

अथवा सुन्दरं काव्यं सिसृक्षुः कविरत्रोद्दिश्यते । तस्य हि महता प्रयत्नेन संजातं काव्यं कालगर्भे निमग्नं सद्य एव लोकेन विस्मर्येत । अथवा चिरं लोके स्तूयेत । कवेः शुभ्रं यशः सम्पादयेत्, अथवा अवहेलनामेव आनयेत् । उभयत्रापि पूर्वानुभूतः क्लेशः सत्य एवेति ।

उपदेशस्तु उत्तरत्र सम्भविष्यन्तौ जयापजयौ अवि-चिन्त्य महान्तः प्रयत्नाः कर्तव्या भवन्ति । पूर्वं तद्विषये चिन्ता न कर्तव्या—इति ।

६६

अथ विविधान् मेघानपदिश्याह—

निघ्नन्तोऽशनिभिः तडिद्विलसितैः चक्षुर्हरन्तो नृणां
विध्यन्तश्च शिलाशतैः परिचिताः प्रायेण धाराधराः ।
वर्षन्तो निभृताः चिरं च समये दृष्टाश्च केचिद्घनाः
यैरव्याजपरोपकारनिरतैर्जात्या यशः स्थापितम् ॥

Generally known are the clouds, which kill (animals) with thunderbolts and rob the people of their sight with streaks of lightning and strike (every one) with numerous hailstones. But also seen are some other clouds very rarely, which silently shower down. By these, which are engaged in helping others without any selfish motive, is established the good reputation of the (whole) family of clouds.

धाराधराः प्रायेण परिचिताः । मेघाः साधारण्येन परिचयविषयाः सन्ति । कथंभूताः ? अशनिभिः निघ्नन्तः । वज्रपातैः जनान् प्राणेभ्यो वियोजयन्तः ।

अपि च, तडिद्विलसितैः नृणां चक्षुः हरन्तः। विद्युत्-प्रभाभिः मनुष्याणां नेत्रपाटवं मुष्णन्तः। अपि च, शिलाश्मैः विध्यन्तः। करकैः सर्वान् जन्तून् ताडयन्तः। एवं च प्रायशः मेघा- हिंसाकरत्वेनैव प्रसिद्धाः। केचिद् घनाः समये चिरं दृष्टाः निभृतं वर्षन्तः सन्ति। केचन मेघाः उचिते समये समागम्य अशब्दं वर्षन्ति। अव्याजपरोपकारनिरतैः यैः जात्या यशः स्थापितम्। निरुपाधिकं परोपकारं कुर्वाणैः तैः मेघैः मेघकुलस्य 'जगज्जीवनदम्' इति कीर्तिः स्थापिता।

एवं मेघमपदिश्य बहूनां दुष्टानां कुटुम्बे जातं यशस्विनं कमप्युदारमुद्दिशति। तस्मिन् कुटुम्बे जाताः प्रायेण प्रजापीडकाः कठोरवाक्या अदानशीलाश्च। "एको गोत्रे प्रभवति पुमान् यः कुटुम्बं बिभर्ति" इति न्यायेन तत्र जातः कोऽपि औदार्येण प्रजानां प्राणप्रदो भवति। तेनैव तस्य कुटुम्बस्य कीर्तिः स्थापिता प्रवृद्धा च भविष्यतीति।

उपदेशस्तु कस्यापि कुलस्य कीर्तिः केनाप्येकेन सम्पादयिष्यत इति।

६७

अथ मेघमेव प्रकारान्तरेणापदिश्य वदति —

नाक्ष्णोर्गच्छसि गोचरं बहुतिथान् मासान्नभस्ये पुनः

संघीभूय समेत्य वर्षसि निरुच्छ्वासं समन्तादपः।

कालं कालमनुव्रजन् मितमिता मश्वस्यपश्चेत्ततः

किं जीमूत तव प्रणश्यति कियत् प्राणन्त्वत. प्राणिनः ॥

O cloud ! You don't fall in the purview of the eyes for many months. But in the month of Bhadrapada (August–Septembcr) you come with a big group and shower down water all over breathlessly. If you come then and then ( in good intervals ) and sprinkle correct quantities of water, what will you lose ? (of course, nothing). But, from that many animals (will be able to) breathe.

हे जीमूत, हे मेघ, बहुतिथान् मासान् अक्ष्णोः गोचरं न गच्छसि । बहुसंख्याकान् मासान् नयनयोः विषयं न यासि । (बहुपूगगणसंघस्य तिथुक्) न दृश्यसे त्वमित्यर्थः । नभस्ये पुनः संघीभूय समेत्य समन्तात् निरुच्छ्वासमपः वर्षसि । भाद्रपदे मासि पुनः समूहेन आगत्य सन्तत धाराभिः भुवमार्द्रयसि । ( नभस्ये तु भाद्रो भाद्रपदोऽपि च इति वैजयन्ती ) कालं कालमनुव्रजन् मितमिताः अपः मुञ्चसि चेत्, तव किं कियत् प्रणश्यति ? काले काले युक्तावधिके समागत्य उचितपरिमाणं जलं मुञ्चसि चेत्, तव का वा हानिः ? अतः प्राणिनः प्राणन्तु । अपेक्षिते काले जीवनाधारं वारि प्राप्य श्वसन्तु इति ।

एवं मेघमपदिश्य कमपि उपाध्यायमुद्दिशति । स उपाध्याय: बहुकालमध्यापनं न करोति । कदाचिदागत्य तु बहु एकदैव पिपाठयिषति । एतेन छात्राणां क्षेमं न भवति । यदि स तदा तदा उचितपरिमाणं पाठं कुर्यात, सर्वे छात्रा: ज्ञानं लभेरन्निति ।

उपदेशस्तु युगपत बहु क्रियमाणं न फलवत भवति । काले काले मितपरिमाणतया विधीयमानमेव फलं दास्यतीति ।

६८

अथ मेघमेवापदिश्य रीत्यन्तरेण वदति—

भग्नं भित्तिभिरालयैर्निपतितं स्रोतोभिराप्लावितं
विध्वस्तं पशुभिश्च संघश इति क्रोशन्ति वृष्टे त्वया ।
त्वय्युद्गृह्णति बारि बारिद जना नश्यन्त्यवश्यं क्षणात्
कीर्तिं चिन्तय दुर्लभां न गणय क्षुद्रान् गुणान् मादृशाम् ॥

People complain loudly when it rains saying, "Walls have tumbled down; Houses have collapsed; floods have washed away (every thing); Animals have died in lots" etc. But, o cloud, if you withdraw the water, all the living beings will surely die in a moment. So, think only about the reputation (which is) hard to earn:

Don't count the base qualities of people like me.

हे वारिद, हे मेघ! (वारि ददातीति वारिदः आतोऽनुपसर्गे कः) त्वया वृष्टे क्रोशन्ति। त्वयि पर्याप्तं वारि वृष्टवति जनाः उच्चैः वदन्ति त्वां निन्दन्तः। किमिति? भित्तिभिः भग्नम्। कुड्यैः भङ्गः प्राप्तः। आलयैर्निपतितम्। गृहाणि निपतितानि। स्रोतोभिराप्लावितम्। प्रवाहाः सर्वं लोकमाप्लावितवन्तः। पशुभिश्च संघशः विध्वस्तम्। विविधैः प्राणिभिः ध्वंसः प्राप्तः। सर्वे जन्तवः प्राणान् अत्यजन्नित्यर्थः। इति एव जनाः क्रोशन्ति। त्वयि वारि उद्गृह्णति, जनाः क्षणाद् अवश्यं नश्यन्ति। जनानां वचनानि श्रुत्वा त्वं यदि वारि आत्मन्येव स्तम्भयसि, क्षणमात्रे ते निश्चप्रचं मरिष्यन्ति। तस्मात्, दुर्लभां कीर्तिं चिन्तय। 'सर्वलोकजीवातु' इति वर्षणेन या कीर्तिः प्राप्यते, दुष्प्रापां तामालोचय। मादृशां क्षुद्रान् गुणान्, न गणय। अस्मादृशां वराकान् गुणान्, दोषसदृशान् मा स्म गणयः।

एवं वारिदमपदिश्य राजानमुद्दिशति। राजन्, त्वयि शासति जनाः अयं हिंसितः, अयं दण्डितः, अयं पीडितः इति शासकं त्वां निन्दन्ति। यदि शासनं स्तम्भितं स्यात, मत्स्यन्यायस्य प्रवृत्त्या न कश्चिज्जीवितुं प्रभवेत्। तस्मात्

शासनमवश्यप्रवर्तनीयं, धर्ममार्गरक्षक इति च यशः प्राप्त-व्यम्। साधारणजनतायाः क्षुल्लकानि वचांसि न गण-नीयानि—इति।

उपदेशस्तु महान्तं भारं वहमानैः, महाकार्याणि कुर्वाणैः निन्दादिकमविगणय्य कर्तव्यभारो वोढव्यः, यशश्च प्राप्त-व्यम्—इति।

६९

अथ चन्दनशाखोटावपदिश्य वदति—

उत्पत्तिर्मलये समुद्रनिलये पन्था वृतो राक्षसैः
तत्रत्यानपि हन्त चन्दनतरूंश्छिन्दन्ति सांयात्रिकाः।
वर्तन्ते सविधस्थिताश्च सुखिनः शाखोटमुख्यद्रुमाः
तन्मन्ये कृतिनस्तु ते तरुकुले ये नोपयोगक्षमाः॥

The birth (of the sandal trees) is in the Malaya mountain, which is situated in (the centre of the) sea. The road (leading to that place) is infested with demons. Nevertheless, the voyaging merchants cut down such sandal trees. The (small, croocked, ugly) trees, whose leader is the Shakota (Trophis Aspera), are very happy even though they are nearby. So, I think

that those who are useless are the cleverest in the family of trees.

श्रीगन्धवृक्षाणामुत्पत्तिः समुद्रनिलये मलये। यो मलयपर्वतः सागरस्य मध्ये वर्तते, तत्र किलोत्पद्यन्ते श्रीगन्धतरवः। पन्थाः राक्षसैः वृतः। तत्र गन्तुं नरभक्षकैः निशाचरैः व्याप्तो मार्ग आश्रयणीयः। तत्रत्यानपि चन्दनतरून् सांयात्रिकाः छिन्दन्ति। ये वणिजः नौकाभिः द्वीपान्तराणि गत्वा वाणिज्यं साधयन्ति, ते सांयात्रिकाः। (सांयात्रिकः पोतवणिक्—इत्यमरः) तादृशा वणिजः सर्वमपि क्लेशं सोढ्वा मलयं प्राप्य तत्रत्यान् चन्दनवृक्षान् कृन्तन्ति। शाखोटमुख्यद्रुमाः सविघ्नस्थिताश्च सुखिनः वर्तन्ते। शाखोटो नाम फलपुष्पविहीनः क्षुद्रवृक्षः। स मुख्यो येषां तादृशाः द्रुमाः समीपवर्तिनोऽपि सन्तुष्टाः निर्बाधाः सन्ति। उपयोगहीना इति कृत्वा न कश्चित् तान् छिनत्ति। तन्मन्ये, तस्माच्चिन्तये। तरुकुले ये नोपयोगक्षमाः ते कृतिनः इति। वृक्षाणां मध्ये ये कस्मा अपि प्रयोजनाय न कल्पन्ते ते कुशला इति। (वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि इत्यमरः)

एवं वृक्षानपदिश्य शौर्यगुणशालिनः कातरांश्च उद्दिशति। शूराः कियत्यपि दूरे सन्तु नाम, राजानः तान् समाहूय

युद्धेषु नियोज्य निघ्नन्ति। भीरवस्तु समीपस्थिता अपि केनापि न गण्यन्ते। अतः त एव कुशला इति।

उपदेशस्तु गुणवतामेव सदा अपायः सन्निहितः, निर्गुणाः सुखमासत इति।

७०

अथ कङ्कमपदिश्याह—

गृह्यन्तां करिणः प्रसह्य विनिहन्यन्तां वराहा वृकाः
भल्लूकाश्च तरक्षवश्च, पथिकाः सन्तु त्वया निर्भयाः।
आखून् कङ्क! खरान् शशान् अनिमिषान् कीटान् पतङ्गानपि
ग्राहं ग्राहमहो कियत् प्रकटयस्याखेटके पाटवम्॥

Let the elephants be caught by force. Let the wild boar, jackals, bears and tigers be killed (by you) so that the travellers will be free from fear. O heron, how much of your skill in hunting you want to exhibit catching rats, donkeys, rabbits, fish, insects and butterflies time and again ?

हे कङ्क, हे लोहपृष्ठाख्य पक्षिन्, करिणः प्रसह्य गृह्यन्ताम्। गजा बलाद् बध्यन्ताम्। वराहाः, वृकाः,

भल्लूकाः, तरक्षवश्च विनिहन्यन्ताम्। वन्याः घोरा ये प्राणिनः वराहादयः, तेऽपि बध्यन्ताम्। पथिकाः त्वया निर्भयाः सन्तु। हेतुभूतेन त्वया पान्थाः अरण्यमार्गक्रमण-वेलायां भीतिरहिता भवन्तु। आखवो मूषिकाः, खरा गर्दभाः, शशाः रोमकर्णाः, अनिमिषा मत्स्याः, कीटाः मशकादयः क्षुद्रजन्तवः, पतङ्गा शलभाः—इत्येतान् ग्राहं ग्राहं आखेटके कियत् पाटवं प्रकटयसि? पुनः पुनः गृह्णन् मृगयायां कियत् कौशलं प्रदर्शयसि? अहो। चिन्तनीयं तव चरितं यत् लोकहिंसकान् दुष्टजन्तून् विहाय अनुपद्रवकारिणोऽल्पान् प्राणिनो निगृह्णासि—इत्यर्थः।

एवं कङ्कमपदिश्य कमपि राजपुरुषमुद्दिशति। हे राजपुरुष, अल्पान् चोरान् जारान् वा गृह्णन् तावत् स्वनैपुणीं किं प्रकटयसि? यदि शक्तिरस्ति, तर्हि प्रकटय घोरेषु ऐकागारिकेषु उत्कोचग्रहणशीलेषु अधिकारिषु च। त्वया कार्यविशेषसाधनाय राजसौधं गच्छन्तो जना निर्भया भवन्तु— इति।

उपदेशस्तु क्षुद्रोपद्रवविद्रावणमात्रेण केनापि गर्वो न वोढव्यः। यदि पाटवप्रकटनेच्छा वर्तते, तर्हि महत्सु जनबाधकेषु स्वसामर्थ्यं दर्शनीयम्—इति।

अथ पयोधिपयोदौ अपदिश्याह—

यादोभिर्वडवाग्निना जलनिधेर्यावत्पयो गृह्यते

किं तावत्युपयुज्यते शततमोऽप्यंशः पयोद त्वया ?

सौजन्यं किमिति ब्रवीमि भवतः सर्वस्वमित्थं त्यजन्

ख्यातः ख्यापयसे पयोधिमपि तं सर्वोपयोगक्षमम् ॥

O cloud, is even a hundredeth part of the sea water that is consumed by acquatic animals and submarine fire got by you ? How can I praise your goodness ? You give away all that you have (to the world) and (while becoming famous also make known the sea as useful for every one.

हे पयोद ! यावत् पयः यादोभिः बडबाग्निना च जलनिधेः गृह्यते, जलजन्तुभिः बडबाबह्निना च यावज्जलं स्वीक्रियते, तावति शततमोऽप्यंशः त्वया उपयुज्यते किम् ? तत्परिमाणके जले शततमो भागोऽपि त्वया स्वीक्रियते किम् ? नैवेति भावः । भवतः सौजन्यं किमिति ब्रवीमि ? तव सुजनता कैः शब्दैः वर्णयामि ? तदुचित-शब्दालाभात् तव सौजन्यं वर्णयितुमशक्यम् । कुत इत्याह—इत्थं सर्वस्वं त्यजन् ख्यातः पयोधिमपि सर्वोप-

योगक्षेमं ख्यापयसे। स्वेन सम्भृतं सर्वमपि जलं जनेभ्यो वितरन् स्वयं त्यागी इति प्रसिद्धस्सन् जलनिधि-मपि "समस्तजनोपयोगसमर्थः" इति प्रसिद्धेः पात्रं करोषि। जना हि "पयोधेः जलं लब्ध्वा पयोदोऽन्यत्र वितरति" इति प्रदानस्य मूलं समुद्रं मन्यन्ते, प्रशंसन्ति च तम्।

एवं पयोधिपयोदावपदिश्य दूरे स्थितं गुरुं, जनतासु प्रचरन्तं तच्छिष्यं चोद्दिशति। स हि गुरुः अरण्ये क्वाप्याश्रमे वसन् जनैः न ज्ञायते। तद्वचांसि च गम्भीर-तमत्वात् जना तदुपयोगं न लभन्ते। शिष्यस्तु तस्मात् विद्यां लब्ध्वा सुलभरीत्या जनान् प्रापयति। स्वयं ख्यातो भूत्वा गुरुमपि ख्याततरं विदधाति।

उपदेशस्तु "गुरुं प्रकाशयेद् धीमान्" इतिनीत्या ज्ञानादीन् लब्धवता तन्मूलस्यापि प्रख्यापनं सौजन्य-द्योतकम्—इति।

## ७२

अथ समस्तं समुद्रं निपीतवन्तमगस्त्यमपदिश्य वदति—

मेघः कश्चिदचेतनः कियदपि स्वीकृत्य सिन्धोः पयः
कीर्तिं तस्य समुच्चिनोति कियतीं धर्मं कियच्छाश्वतम्।

ब्रह्मज्ञस्तपसां निधिस्त्रिभुवनख्यातश्च कुम्भोद्भवः

सर्वस्वं विनियुज्य तस्य किमिव श्रेयः समापादयत् ?

The cloud, which is only inert, obtains some water from the ocean and earns for it (the ocean) much fame as well as permanent merit. What good did the pot-born sage (Agastya) who knew the supreme, was a treasure of penance and was well known in all the hree worlds, bestow on the ocean after utilising his whole wealth ?

कश्चिन्मेघः अचेतनः। कोऽपि जलदः जडात्मकः, अस्ति। सः सिन्धोः पयः कियदपि स्वीकृत्य तस्य कियतीं कीर्तिं समुच्चिनोति ? समुद्रात कियन्मात्रमपि जलं गृहीत्वा स मेघः तस्य समुद्रस्य महद् यशः सम्पादयति। कियत शाश्वतं धर्मं समुच्चिनोति ? सर्वेषां प्राणिनां जीवनदं जलं तदपेक्षिते काले वितीर्य समुद्रस्य पुण्य नित्यं वर्धयति च स मेघः। कुम्भोद्भवः ब्रह्मज्ञः तपसां निधिः, त्रिभुवन-ख्यातश्च। कुम्भे घटे उद्भव उत्पत्तिः यस्य सः (अगस्त्यः कुम्भसम्भवः इत्यमरः), ब्रह्मणां वेदानां ज्ञः ज्ञाता। (वेदः सत्यं तपो ब्रह्म-इत्यमरः) अपि च तपसां शेवधिः। त्रिषु भुवनेषु प्रसिद्धश्च। तादृशः कुम्भोद्भवः सिन्धोः सर्वस्वं विनियुज्य तस्य किमिव श्रेयः समापादयत् ?

समुद्रस्य समग्रं जलं निपीय तस्य किं वा कल्याणमसाधयत्? न किमपि। तस्माज्जडोऽपि मेघः चेतनादगस्त्यात् श्रेया-नित्यर्थः।

तत्रागस्त्यस्य कुम्भे समुद्भवः पुराणप्रसिद्धः। मित्रा-वरुणौ यागविशेषे अप्सरसमुर्वशीं दृष्टवन्तौ, विचलितमनसोः तयोः वीर्यं कुम्भे न्यपतत्। ततः तत्र वसिष्ठः अगस्त्यश्च उदपद्येताम्। यथोक्तं भागवते षष्ठस्कन्धे अष्टादशाध्याये—

अगस्त्यश्च वसिष्ठश्च मित्रावरुणयोर्ऋषी।
रेतः सिषिचतुः कुम्भे उर्वश्याः सन्निधौ हुतम्॥

इति। यथा च वर्णितं यास्कनिरुक्ते—

तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम्।
रेतश्चस्कन्द तत्कुम्भे न्यपतत् वाशतीवरे॥
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी सम्बभूवतुः॥ इति

अगस्त्यः समुद्रपानमकरोदित्यत्र चैषा पौराणिकी कथा वर्तते। पुरा कालेया नाम राक्षसा आसन्, येषां वृत्रो नेता अवर्तत। इन्द्रेण निहते वृत्रे ते कालेयाः समुद्रं प्रविविशुः। रात्रौ बहिर्निर्गत्य च ते ऋषीन् हिंसन्ति स्म। ऋषिभिः प्रार्थिता देवाः विष्णुं शरणं जग्मुः। समुद्रे शोषित एव तेषां राक्षसानां संहरणं शक्यमिति विष्णुरुवाच। तस्मिन् कर्मणि मुनिरगस्त्य एव समर्थ

इति च तेन ऊचे । ततो देवाः अगस्त्यमेव प्रार्थयामासुः। तां प्रार्थनामङ्गीकृत्य अगस्त्यः समुद्रं पपौ । यथोक्तं महाभारते वनपर्वणि चतुरुत्तरशततमे अध्याये—

स पूज्यमानस्त्रिदशैर्महात्मा
गन्धर्वतूर्येषु नदत्सु सर्वशः ।
दिव्यैश्च पुष्पैरवकीर्यमाणो
महार्णवं निस्सलिलं चकार ॥
दृष्ट्वा कृतं निस्सलिलं महार्णवं
सुराः समस्ताः परमप्रहृष्टा ।
प्रगृह्य दिव्यानि वरायुधानि
तान् दानवान् जघ्नुरदीनसत्त्वाः ॥ इति ।

एवं कुम्भसम्भवमपदिश्य राज्ञो बहुधनं प्राप्यापि तस्य कीर्तिमप्रसारितवन्तं कमपि विद्वांसमपदिशति । तदपेक्षया अल्पं साहाय्यं लब्धवान् अन्यः कोऽपि जडात्मा राज्ञः कीर्तिं प्रसारयन् श्रेयान् इति ।

उपदेशस्तु कृतमुपकारं यः स्मरन् उपकर्तुः यशः विस्तारयति, स एव स्तुत्यः जडोऽपि, नेतरो विद्यावानपीति ।

७३

अथ मेघानेवापदिश्य प्रकारान्तरेण स्तौति—

यच्छैलेषु यदर्णवेषु यदपि ग्रावाटवीजाङ्गल-
प्रायासु क्षितिषु क्षिपन्ति बहुशस्तोयं वृथा तोयदाः ।

दृष्टिस्तत्र न दीयतां यदि गुणग्राही भवान् यत्पुनः
ग्रामेषूपवनेषु वा सकृदमी वर्षन्ति तद् गृह्यताम् ॥

Don't cast your eyes on the water which the clouds usually pour down in vain on the mountains, oceans and places which are mostly rocky, forests or uninhabited. If you are a virtue seeker, consider only that water which these (clouds) shower in villages and gardens once (in a while).

तोयं जलं ददतीति तोयदाः। ते शैलेषु अर्णवेषु च वृथा यत् तोयं क्षिपन्ति, गिरिषु समुद्रेषु च निष्प्रयोजनतया जलं यत् वर्षन्ति, यदपि च ग्रावाटवीजाङ्गलप्रायासु क्षितिषु बहुशः क्षिपन्ति, अश्ममये, अरण्यमये, अत्यल्पद्रुमजले वा प्रदेशे यदम्बु मुञ्चन्ति प्रायशः, तत्र दृष्टिः न दीयतां, तस्मिन् विषये एव अवधानं मा स्म दाः। (अनूपः साम्बुरन्यस्तु जाङ्गलः शून्य उज्जटः इति वैजयन्ती। जाङ्गलोऽल्पद्रुमजलः इति कोशान्तरम्) यदि भवान् गुणग्राही, यदि त्वं गुणग्रहणशीलः तर्हि, ग्रामेषु उपवनेषु वा अमी सकृद् यद् वर्षन्ति तद् गृह्यताम्। कर्षकवासस्थानभूतासु पल्लीषु विविधवृक्षविभूषितेषु आरामेषु च यदेते वृष्टिं कदाचिदपि स्रावयन्ति, तत्र अवधेहि—इति।

एवं मेघमपदिश्य नियतिमुद्दिशति । नियतिः श्रीमत्त्वं विद्वत्त्वं शौर्यं तथेतरान् प्रशस्यान् गुणान् च अपात्रेषु निक्षिपति । अनुदारे धनं, मत्सरिणि विद्या नृशंसे शौर्यमित्यादिक्रमेण । तथापि मतिमता तत्र दृष्टिः न देया । यदा कदाचिद् योग्ये भाजनेऽपि नियतिर्गुणान् इमान् न्यस्यति खलु, तत्रैव मनः धेयम् , तावतापि सन्तोषः प्राप्तव्य इति ।

उपदेशस्तु पौरोभाग्यं (दोषैकदृक्त्वं) न युज्यते, लोके गुणेष्वेव सद्भिरवधातव्यं, न दोषेषु—इति ।

७४

अथ वेधसमपदिश्याह—

ग्रामेष्वेव सुवृष्टयो विनयवत्स्वेव श्रियः पुष्कलाः
धीमत्स्वेव कलागमव्यसनिता गोष्वेव दुग्धस्थितिः ।
वाग्मिष्वेव विवक्षुतेति च जगत्प्रार्थ्यां व्यवस्थामिमां
किं वेधा विदधे पुरेति शृणुमो रामेऽपि राज्यस्थितिः ॥

Good rains only in villages, abundant riches only in modest people, inclination to arts and letters only in the wise, milk only in cows and the desire to talk only in orators–this is the sort of arrangement that is requested by the world. Did the creator ever make

(such arrangement)? Well, we hear that (the administration of) the kingdom (was in the hands) of Rama.

जनैः लोके काचिद् व्यवस्था प्रार्थ्यते। का सा? ग्रामेष्वेव सुवृष्टयः। यत्र कृषिकाः वसन्ति, क्षेत्रेषु च सस्यानि रोहन्ति, तेषु कृषिप्रधानेषु ग्रामेष्वेव वर्षाणि पतन्तु एवकारः अन्यव्यवच्छेदाय। तथा च समुद्रपर्वतमर्वादिषु वृष्टिः व्यर्था न भवत्विति। विनयवत्स्वेव पुष्कलाः श्रियः। प्रश्रयशालिष्वेव समृद्धाः सम्पदः इति। तथा च गर्विषु लोककण्टकेषु श्रियामभावः अस्त्विति भावः। धीमत्स्वेव कलागमव्यसनिता। बुद्धिमत्स्वेव जनेषु विद्यार्जनासक्तिः इति। न तु बुद्धिशून्यानां वितथा व्यसनं, तेन सर्वेषां क्लेशस्यैव जायमानत्वादित्यर्थः। गोष्वेव दुग्धस्थितिः। धेनुष्वेव क्षीरोत्पत्तिः, न तु करभादिषु, उपयोगानर्हत्वात्। तथा वाग्मिष्वेव विवक्षुता। प्रशस्ताः वाचः एषां सन्तीति वाग्मिनः। (वाचो ग्मिनिः) वक्तुमिच्छुः विवक्षुः (सनाशंसभिक्ष उः), तस्य भावो विवक्षुता। श्रेष्ठेषु वक्तृष्वेव वक्तुमिच्छा स्यादित्यर्थः। अन्येषु तस्याः सत्त्वे श्रोतॄणां शिरोवेदनाया एव फलत्वात्। इत्येषा व्यवस्था जगत्प्रार्थ्या। एषा रीतिः सकललोकापेक्षिता। किन्तु एतां किं वेधा विदधे? किं सृष्टिकर्ता कदापि अकरोत? पुरा रामेऽपि राज्यस्थितिः

इति शृणुमः । नेदमस्माकं प्रत्यक्षं, रामे राज्यभारस्य स्थितिं पूर्वेभ्यः शृणमः, तदानीं तादृशी व्यवस्था आसीदिति च श्रूयते । तावन्मात्रेण सन्तोष्टव्यमित्यर्थः ।

एवं वेधसमपदिश्य कामपि राज्यव्यवस्थामुद्दिशति । अस्मिन्नेव कर्मणि धनं व्ययितव्यम्, अस्मै एव अधिकारो दातव्यः, अत्रैव गौरवं समर्पणीयमित्यादिकं प्रजाः प्रार्थयन्ते । राजा तथा करोति किम् ? नैव । पुरा कदाचन कस्यापि राज्ञो राज्यभारे सर्वं तथासीदिति तु वृद्धाः कथाप्रसङ्गेन श्रावयन्तीति ।

उपदेशस्तु — वृष्ट्यादीनि ग्रामादिष्वेव भवेयुरिति अस्माकमाकांक्षा । परं तु तानि तत्रैव वेधसा न क्रियन्ते । कदाचित्तत् तथा अवर्ततेति वचनानि तु श्रूयन्ते इति ।

७५

अथ पद्माश्रयभूतां सरसीमपदिश्य वदति —

उन्मीलन्ति कियन्ति वा न कुसुमान्युष्णद्युतेरुद्गमे
तत्त्वे तावति बन्धुरित्यतिसखीत्यादिरम्यकान्तेति च ।
कीर्तिं दत्तवतां त्रिलोकविदितामेवं कवीनामृणं
किं कृत्वेयमपाकरोतु जनुषां कोट्यापि नालीकिनी ?

How many a flower doesn't bloom when the sun rises? While it is the

fact (that many flowers do bloom when the sun rises), how, even in a million births, can the lotuspond clear the debt (she owes) the poets who have bestowed upon her the reputation known to all the three words, (of being) the relative, the closest friend and also the spouse of the sun ?

उष्णद्युते: उद्गमे कियन्ति वा कुसुमानि नोद्गच्छन्ति ? सूर्यस्योदये कति वा पुष्पाणि न विकसन्ति ? सहस्रश: तानि प्रात: सूर्यकिरणस्पर्शमात्रेण विकसन्त्येव । तावति तस्वे बन्धु: इति, अतिसखी इति आदित्यकान्ता इति च कवय: नालीकिन्यै कीर्तिं दत्तवन्त: । समानेऽपि स्वभावे बहूनां पुष्पाणां, विशिष्य पद्मिन्यै कविभि: कीर्ति: दत्ता । पद्ममयी सरसी पद्मिनी नालीकिनी इत्यादिशब्दैरुच्यते । (बिसिनी पद्मिनीत्याद्या: पद्मस्तम्बे सरस्यपि इति, नालीक-मञ्जे इति च वैजयन्ती) एवं त्रिलोकविदितां कीर्तिं दत्त-वतां कवीनाम् ऋणमियं नालीकिनी जनुषां कोट्यापि किं कृत्वा अपाकरोतु ? अनेन प्रकारेण त्रिषु लोकेषु प्रख्यातां समज्ञां ये कवय: सम्पादितवन्त: तेषामृणं कथं वा इयं पद्मिनी निर्यातयतु ? जन्मनां कोटिरपि तत्र नालमित्यर्थ: ।

एवं नालीकिनीमपदिश्य राजावलीमुद्दिशति। सम्पदः अधिकारस्य च प्राप्तौ कस्य वा तेजसः ओजसश्च वृद्धिः न भवति? तथापि कवयो राज्ञः "तेजोनिधिः" विक्रमवारिधिः इत्यादिभिः बिरुदैः वर्णयन्ति। जन्मनां शतैरपि कवीनामृणं राजभिः निर्यातयितुं न शक्यते इति।

उपदेशस्तु "कवयः साधारणेष्वपि गुणेषु असाधारण्यमारोप्य ललितैः शब्दैः कमपि वर्णयन्ति चेत्, वर्ण्यमानस्य तादृशी एव प्रथा लोके जायते। स तेषां कवीनामेव आत्मानमधमर्णं मन्येत—इति।

७६

अथ मृषारणकौशलमपदिश्याह—

विद्धं साधु न साध्विव प्लुतमिदं रे रे कथं विध्यसी-
त्याख्यातुं रणकौशलं वयमपि प्रौढाः स्थिता दूरतः।
आक्रामन् रणमेदिनीमपि वहन् खड्गं विकोशं करे
वेत्ति स्वं च परं च यद्यवहितो विक्रान्तिरेषैव नः॥

"That is a good stroke"; "This is not a very good jump"; "Hey! How are you hitting?"–Thus to describe the skill in fighting, we are experts (provided) we are at a good distance (from the battle field). Our real valour (can be said to have reached its zenith)

if we enter the battle field, hold the unsheathed swords in the hands and also be conscious enough to know the fellowmen from the enemies.

रणकौशलमाख्यातुं वयमपि प्रौढाः । (प्रादूहोढोढ्येषैष्येषु—इति वृद्धिः) युद्धपाटवं वर्णयितुं वयं शक्ततमाः । कस्यामवस्थायाम् ? दूरतः स्थिताश्चेत् । यस्मिन् देशे शस्त्राशस्त्रि युद्धं प्रवर्तते ततः दूरे अनपाये स्थले वयं वर्तामहे चेत् । कथमाख्यातुम् ? साधु विद्धम्, इदं प्लुतं न साध्विव, रे रे कथं विध्यसि ? इति । सम्यक् ताडितं, प्लवनमिदं न तावत् सम्यक्, रे रे केन प्रकारेण वेधं करोषि इत्यादिवचनैः संग्रामविषयान् अधिकृत्य वक्तुं वयमतीव कुशला इति यावत् । स्वस्य विक्रमः रणरङ्गे कीदृश इत्याह—रणमेदिनीमाक्रामन् विकोशं खड्गं करे वहन् अवहितः सन् स्वं च परं च यदि वेत्ति, एषा एव नः विक्रान्तिः । युद्धभूमिं प्रविश्य कोषाद् असिं निर्मोच्य करे धारयित्वा शत्रुः कः ? अस्मदीयः कः ? इति विवेक्तुं यदि प्रभवामः, स एवास्माकं विक्रमः । शत्रुषु आयुधप्रयोगस्य कथा दूरे आस्तां नाम —इत्यर्थः ।

एवं रणरङ्गमपदिश्य वादवेदिकामुद्दिशति । गृहे स्थित्वा सर्वेऽपि वादविषयां कथां कुर्वते । "अयं प्रश्नः

समीचीनः, इदमुत्तरमुचितम्, इयं वाक्सरणिर्न रमणीया, असौ विद्वान् किमर्थमेवं भाषते?" इत्यादिवाचः विस्तारयितुं न किमपि कष्टम्। यदि तु स्वयं वादवेदिकामारुह्य कमपि विषयं प्रस्तोतुं प्रारभते, तदा विपश्चित्सु अनुयुञ्जानेषु "मया किं प्रस्तुतं, किमेतैः पृष्टम्" इति विजानाति चेत् सैव पाण्डित्यस्य पराकाष्ठेति मन्तव्यम्—इति।

उपदेशस्तु "दूरतः सकलाः शूराः, रङ्गे प्रविश्य तु सर्वे भीरवो भवन्ति, कश्चिदेव तत्र स्वीयं पाटवं प्रदर्शयितुं प्रभवति" इति।

७७

अथ भृङ्गमपदिश्य वदति—

अम्भोजेष्वतिकोमलेषु विहरन्नन्तर्जले संविशन्
अज्ञातातपवातवर्षमनयत् कालं चिरं यः सुखम्।
सोऽद्य प्रावृषि केतकीमधिवसन् भृङ्गः क्षतः कण्टकैः
आविद्धः करकोपलैरभिहतो वातैः कथं वर्तते॥

How does the bee, who spent a long time comfortably playing in the very soft lotuses and sleeping (in the flowers) in the midst of (cool) water without any knowledge of sun, wind or rain, live now in the rainy season, staying in

the Ketaki tree, wounded by the thorns, hit by the hail stones and lashed by the winds ?

भृङ्गः चिरं कालं सुखमनयत् । भ्रमरः दीर्घं समयं सन्तोषमयापयत् । कथम् ? अतिकोमलेषु अम्भोजेषु विहरन् । अतीव मृदुलेषु पद्मेषु क्रीडन् । अपि च कथम् ? अन्तर्जले संविशन् । सरसीजलस्य मध्ये स्वपन् । पुनः कथम् ? अज्ञातातपवातवर्षम् । आतपः सूर्यस्य घर्मः, वातो मारुतः, वर्षं वृष्टिः, एते न ज्ञायन्ते यस्मिन् कर्मणि तद् यथा भवति, तथा । यः एवमानन्देन कालयापनमकरोत् , सः भृङ्गः अद्य कथं वर्तते ? अधुना कथङ्कारं जीवति ? अद्य कः काल इत्याह–प्रावृषि इति । वर्षाकाले इति यावत् । एवं च कमलानि सर्वाणि विनष्टानीत्यर्थः । तर्हि क्व वसति भृङ्गः ? केतकीमधिवसन् । केतक्यां वासं करोति इत्यर्थः (उपान्वध्याङ् वसः इति द्वितीया) अपि च, कण्टकैः क्षतः । केतक्याः पुष्पाणां तीक्ष्णाग्रैः व्रणितः । तथा, करकोपलैः आविद्धः । वर्षोपलैः समन्तात् ताडितः । अपि च, वातैः अभिहतः । वेगेन वाद्भिः मारुतैः घट्टितः । महति सुखे स्थितस्य अतीव दुःखे निपतनं शोककारणमित्यर्थः ।

एवं भृङ्गमपदिश्य राजास्थाने सुखमुषित्वा ततः क्वापि कुग्रामे विधिवशाद् वसन्तं कमपि कविमुद्दिशति । पूर्वं

सः चोरदारिद्र्यादिभिः न पीडितः, तद्वार्तामपि सः नाजानात्। इदानीं तु विविधानि कष्टानि उच्चावचान् क्लेशान् चानुभवति। कथं वा स जीविष्यति ? इति।

उपदेशस्तु सुखात्तु यो याति नरो दरिद्रतां, सः शरीरेण धृतोऽपि मृत एव सन् श्वसिति इति।

७८

अथ भ्रमरमेवापदिश्य प्रकारान्तरेण वदति—

ब्रूते स्वागतमीक्षते कृशममुं श्रुत्वा कथाः खिद्यते
पक्षाभ्यामसकृत् प्रमार्ष्टि रचयत्युच्चावचाश्चाशिषः।
उच्छिन्नप्रसवाच्चरोरुपगते भृङ्गे क्षुधा ताम्यति
प्रस्तौति भ्रमरस्तु पूर्णजठरो नाहारवार्तामपि॥

When a bee comes from a tree (which was its abode and) which had ceased (to possess) flower buds (to the dwelling of one of his friends), the (host) bee extends a warm welcome, feels that the guest has become too thin, gets depressed on hearing the tales (of woe), fans the guest a number of times with his wings and also bestows various blessings on him. But, notwithstanding the fact that the (guest) bee is languishing due to hunger, the (host) bee, whose

belly is full, doesn't even mention the topic of food.

अतिथित्वेन प्राप्तस्य भृङ्गस्य आतिथेयः भ्रमरः कीदृशं सत्कारमकरोदित्याह— ब्रूत इति । स्वागतं ब्रूते । कुशलं पृष्ट्वा "सुस्वागतं तव" इति वदति । अमुं कृशमीक्षते । एतं भृङ्गं क्षीणतनुं भावयति । यथा मातरः दूरात् प्राप्तान् सुतान् क्षीणगात्रान् पश्यन्ति वात्सल्याधिक्येन तथेत्यर्थः । कथाः श्रुत्वा खिद्यते । भृङ्गस्य दुःखमयीः कथाः आकर्ण्य खिन्नो भवति । पक्षाभ्यामसकृत् प्रमार्ष्टि । पतत्त्रद्वयेन श्रमापनोदनाय भृङ्गस्य कायं मृदुलं परामृशति । उच्चावचाः आशिषः रचयति । अनेकविधान् आशीर्वादान् प्रकामं प्रयच्छति । एवं स्थिते भृङ्गस्य तत्रागमने कारणमाह— उच्छिन्नप्रसवात् तरोः भृङ्गे उपगते । नष्टकुसुममुकुलाद् वृक्षात् भृङ्गे समागते सति । एवं च स्वावासे भृङ्गस्य आहारालाभ उक्तो भवति । तदेवाह— क्षुधा ताम्यति इति । क्षुत्पीडया सीदति सति भृङ्गे इति । पूर्वोक्तानां विविधोपचाराणामनन्तरं किं भ्रमरो भृङ्गाय भोजनमदात् ? नैव । पूर्णजठरो भ्रमरः आहारवार्तामपि न प्रस्तौति । स्वयं सम्यग् भुक्तवान् आतिथेयमहाभागः भोजनकथामपि न करोति, दूरे साक्षाद् दानमिति भावः ।

एवं अपरमपदिश्य कमपि आतिथेयमुद्दिशति । बन्धौ समागते स आतिथेयः स्वागतेनाभिवन्द्य योगक्षेमविचारणां करोति । बाह्योपचारं विविधं करोति । विविधं कथा-लापं च वितनोति । परं तु स्वयं भुक्तवानपि क्षुधा बाध्यमानस्य बन्धोः पुरस्तात् भोजनविषये एकमपि वचनं न वदति । यदि वदेयं किञ्चित्, तर्हि असौ भोजनमपेक्षिष्यते, अस्मै किञ्चिद् दातव्यं भविष्यति, किमपि अदत्वा वचनोपचारमात्रेण एनं निवर्तयामि— इत्येव स चिन्तयतीति ।

उपदेशस्तु " वचने का दरिद्रता " इति न्यायेन सर्वे अतिथीन् वाचा समाद्रियन्ते । वस्तुतः ते किमपि न दातुमिच्छन्ति—इति ।

७९

अथ वृद्धं कमपि हंसमपदिश्य वदति—

ये मृष्यन्ति सहासिकामपि बकैर्जात्या न हंसाः स्वतः
तेष्वेको जरसा विलुप्तगमनस्त्यक्तः स्वकैः प्रावृषि ।
तानेवानुसरन् बकान् बहुतरं तच्चेष्टितानि स्तुवन्
तज्जात्यं स्पृहयन् कियत् कियदहो जातिं निजां निन्दति॥

The swans, by nature, don't tolerate even sitting in the company of cranes. One of those swans, who had lost nimbleness in movement due to old

age, was abandoned by his kith and kin in the rainy season. That old swan, following the very cranes, praising all their deeds profusely and longing for becoming a crane, despises his own species.

हंसाः जात्या स्वतो बकैः सहासिकामपि न मृष्यन्ति । सितगरुतः पक्षिविशेषाः हंसाख्याः बकाभिधैः नीचैः पक्षिभिः सहावस्थानमपि स्वभावेनैव न सहन्ते । ये हंसाः तादृशाः, तेषु एकः प्रावृषि स्वकैः त्यक्तः । तेषां मध्ये एकः स्वकीयैः बन्धुभिः परित्यक्तः । किं तादृशपरित्यागे कारणम् ? जरसा विलुप्तगमनः । स त्यक्तो हंसः वार्धकेन नष्टोत्पतनशक्तिरभूत् । पक्षयोः सामर्थ्यस्य कुण्ठितत्वात् एष नास्माभिः सह प्रयातुं शक्त इति भावयद्भिः इतरैर्हंसैः प्रयातम् । ततोऽसौ वृद्धहंसः किं कुरुते । तानेव बकान् अनुसरन् अस्ति । यैः सह पूर्वं नोपवेष्टुमपि क्षणमैच्छत, तानेव दैन्येन अनुगच्छति । अपि च, तच्चेष्टितानि बहुतरं स्तुवन्नस्ति । तेषां बकानां चेष्टाः अपि भूयसीभिः विधाभिः प्रशंसति । तज्जात्यै स्पृहयन्नस्ति । बकत्वं मे भवेत्—इति अतितरामाकांक्षति । (स्पृहेरीप्सितः—इति चतुर्थी) अहो, निजां जातिं कियत् कियत् निन्दति ! स्वीयं हंसकुले जन्म प्रकामं गर्हते च ।

एवं हंसमपदिश्य उत्तमवर्णजं कमप्युद्दिशति । स हि पूर्वं स्वकीयैः सहितः वर्णाधमैः सहासितुमपि न सहते स्म । कारणान्तरेण देशान्तरं गच्छद्भिः स्वकीयैः परित्यक्तः । ततस्तैरेव वर्णाधमैः सार्धं वस्तुमिच्छन् तानेवानुकरोति, तेषां निन्द्यान्यपि कर्माणि स्तौति । अधमेष्वेवाहं कुतो न जात इति चिन्तयन् स्वीयां जातिं निन्दति—इति ।

उपदेशस्तु उत्तमेषु जाता अपि नराः स्वीयैः परित्यक्ताः अधमेषु मिलितुमिच्छन्ति, तानेवानुकुर्वन्ति, तत्त्वाय स्पृहयन्तः स्वां जातिं गर्हन्त इति ।

८०

अथ बकहंसावपदिश्याह—

शुद्धिं स्वामनुचिन्त्य मीननिवहैः पूर्णेऽपि पद्माकरे
स्वेनैवोपनतैर्मृणालवलयैर्जीवन्ति हंसाः सुखम् ।
ये त्वेते विमलास्ततोऽपि च बका ध्यानैकनिष्ठाः सदा
निर्द्वन्द्वा निभृताश्च बिभ्रति तु ते यादोभिरेवोदरम् ॥

Even though the lotus pond is full of schools of fish, the swans live only on the freely available lotus fibres happily, giving consideration to their whiteness (i.e. purity). The cranes, which are whiter than the swans, always immersed in meditation, devoid of duality and

silent, fill up their belly with aquatic creatures.

हंसाः स्वेनैवोपनतैः मृणालवलयैः सुखं जीवन्ति। श्वेतगरुतः हिंसां विना स्वयं लभ्यमानैः पद्मकाण्डान्तर्गतैः मृणालसूत्रैः उदरं पूरयन्तः प्रमोदेन वर्तन्ते। कदा? मीननिवहैः पद्माकरे पूर्णेऽपि। मत्स्यसमूहैः कमलसरसि निबिडतया व्याप्तेऽपि। कुतः सुलभं लभ्यमानेष्वपि मत्स्येषु रुचिरेषु हंसैः एवं क्रियत इत्याह– शुद्धिं स्वामनुचिन्त्येति। शुद्धिः धवलता, निष्कल्मषता च। वयं बहिः शुद्धवर्णाः, आन्तरिकी शुद्धतापि परिपालनीया — इति मन्यमानैः हंसैः, प्राणिवधक्रूरदोषं परिजिहीर्षुभिः, सुलभा अपि मत्स्याः त्यज्यन्ते। ये त्वेते बकाः ततोऽपि विमलाः, सदा ध्यानैकनिष्ठाः, निर्द्वन्द्वाः, निभृताश्च सन्ति, ते यादोभिरेव उदरं पूरयन्ति। ये कह्वापरनामानः बकपक्षिणः, हंसेभ्योऽपि धवलतराः, सर्वदा निदिध्यासनपराः एकाकिनः, मौनशीलाश्च, ते विविधान् जलजन्तून् गृहीत्वा खादन्ति तथैव कुक्षिंभरयो भवन्तीत्यर्थः।

एवं हंसबकावपदिश्य गृहस्थान् संन्यासिनश्च उद्दिशति। गृहस्था हि पापाद् भीताः यदृच्छालब्धैः विषयैः तृप्यन्ति। ये तु शुद्धतमानात्मन आचक्षते, सदा ध्यानशीला इव नटन्ति, एकान्ते वसन्ति, मौनव्रतधारिण इति नेत्रे निमील्य

विजृम्भन्ते, ते तु अधर्म्यान् भोगानेव भूयसो भुञ्जते इति ।

उपदेशस्तु बाह्याडम्बरशालिनः सदा साधवो न भवन्ति ते प्रायो धूर्ता एव, साधारणमनुष्येभ्योऽपि ते हीना एव गणनीयाः इति ।

८१

अथ बकमेवापदिश्य प्रकारान्तरेण कथयति—

यैर्जीवन्ति सितच्छदा न दुरितं कस्यापि यत्संग्रहे
रोचन्ते न हि ते मृणालवलया अस्मै प्रभूता अमी ।
अप्यासायमुपोष्य मीनपृथुकैर्युक्त्या महत्यार्जितैः
एकद्वैरपि तृप्तिमेति परमां हिंसोपलब्धैर्बकः ॥

The crane never relishes the abundant lotus fibres on which the swans live and which are obtainable with out sinning. It gets the maximum satisfaction with the few young fish which are caught very cunningly involving violence as well, (even if it means) fasting till the evening.

अस्मै प्रभूता अमी मृणालवलया न रोचन्ते । एतस्मै बकाय प्रचुरा एते पद्मनालतन्तवो न रोचन्ते । (रुच्यर्थानां प्रीयमाणः इति चतुर्थी) कीदृशा मृणालवलयाः ? यैः सितच्छदा जीवन्ति । यान् खादित्वा हंसाः आत्मभरणं

कुर्वन्ति । पुनः कीदृशाः ? यत्संग्रहे कस्यापि दुरितं न । येषां लाभे कस्यापि पापं न जायते । तथा च हंसप्रियाः पापानाधायकाः बिसतन्तवो बकाय न रोचन्त इति फलितम् । तर्हि कथं स जीवतीत्याह — आ सायमुपोष्यापि बकः महत्या युक्त्या आर्जितैः हिंसोपलब्धैः एकद्वैरपि मीनपृथुकैः तृप्तिमेति । सायङ्कालपर्यन्तं निराहारं स्थित्वापि कहः अधिकया वञ्चनया गृहीतैः पीडया सम्पादितैः कतिभिश्चित् मत्स्यशिशुभिः तोषमाप्नोति । एको वा द्वौ वा एकद्वाः, तैः, अत्यल्पसंख्यैरिति यावत् । एवं च कष्टार्जितैरपि पापजनकैरपि आहारैः बकस्तृप्यत इति यावत् ।

एवं बकमपदिश्य कमपि दुर्जनमुद्दिशति । सज्जनाः यैः निष्पापैः सन्मार्गलब्धैः धनैः जीवन्ति, अस्मै दुर्जनाय तादृशं धनं न रोचते । परहिंसया महत्या कुयुक्त्या यदल्पमपि लभ्यते, तादृशेनैव धनेन दुष्टः तुष्यति—इति ।

उपदेशस्तु यो जीविकामार्गः सद्भिः आश्रितः, परपीडां च न जनयेत्, तमेव हितमिच्छन् आश्रयेत् । अन्यथा बकवत् इह च परत्र च दुःखभाग् भवेदिति ।

८२

अथ काकमपदिश्याह—

अस्पृश्योऽस्तु मलीमसोऽस्त्वनियताहारोऽस्त्वतोप्युद्भटैः
दोषैरस्तु परःशतैः परिवृतः काकस्ततः का क्षतिः ?

भुङ्क्ते भोज्यमुपस्थितं समुपहूयैव स्वयं बान्धवान्
य: सीदन् क्षुधया विचिन्तय ततो धन्यश्च पुण्यश्च कः?

The crow might be an untouchable (bird, that eats) any food without restrictions. It might be full of numerous other glaring blemishes. What is lost on account of that ? Think, is there any one more fortunate and more benevolent than (the crow) who, even languishing with hunger, eats the available food only after inviting all his relatives (to share it) ?

काकः अस्पृश्यः अस्तु । स्पर्शानर्हो भवतु नाम । मलीमसः अस्तु । मलिनः आस्तां नाम । (मलीमसस्तु मलिनं कच्चरं मलदूषितम्-इत्यमरः) अनियताहारः अस्तु । ग्राह्याग्राह्यनियमं विना आहारं स्वीकुर्वाणः संस्तु नाम । परश्शतैः अतोऽपि उद्भटैः दोषैः परिवृतः अस्तु । उक्तेभ्यः अस्पृश्यत्वादिभ्यो दोषेभ्योऽपि उत्कटैः शतादधिकैः दोषैः पूर्णः अपि आस्तां नाम । ततः का क्षतिः ? तेन तस्य काकस्य का वा हानिः ? न कापि । कथमित्याह—यः क्षुधया सीदन् बान्धवान् समुपहूयैव उपस्थितं भोज्यं भुङ्क्ते, ततो धन्यश्च पुण्यश्च कः : क्षुत्पीडया नितान्तं बाध्यमानोऽपि असौ

काकः स्वीयान् बन्धून् भोजनाय आहूय तदनन्तरमेव, ग्रासमपि आहारं भुङ्क्ते। मयेदं भोज्यं प्राप्तं, मम क्षुधामहं शमयामि, अन्येषां मम का वा चिन्ता? इति कदापि काको न भावयति। सर्वैः बन्धुभिः सहैव स भुङ्क्ते। तस्मात् स एव धन्यः पुण्यश्च—इति।

इत्थं काकमपदिश्य विविधदोषाश्रयं, तथापि श्रेष्ठेन प्रेमादिना आत्मगुणेन भूषितं कमप्युद्दिशति। सन्तु बहवो दोषाः, तैः न कापि हानिर्जायते। एकेनैव गुणेन स श्लाघ्यो भवतीति।

उपदेशस्तु एकोऽपि महान् गुणो दोषराशिमपि आच्छादयति इति।

८३

अथ पिककाकावपदिश्याह—

भृत्यास्ते बिभृमस्तु तान् वयमिमे क्षुद्रा बृहन्तो वयं
जातौ पक्षवताममी तु कलकण्ठाः कालकण्ठा वयम्।
इत्युद्भावयसे कुहूमुखकुलादुत्कर्षमेवात्मनः
कण्ठे पातयिता कदा खलु भवान् काक स्वरं पञ्चमम्॥

The cuckoos) are (our) servants; We bring them up. They are tiny; We are large. In the family of the winged ones (i. e. birds,) these are

"KalaKanthas" (i.e. Possessers of sweet voice) while we are "KaalaKanthas" (i. e. Possessers of black neck) Thus, O crow, you (try to) show your superiority over the species of the cuckoos. But, when are you going to possess the Pancama (the fifth) note in your voice ?

हे काक, कुहूमुखकुलाद् आत्मनः उत्कर्षमेव उद्भावयसे। त्वं कोकिलेभ्यः स्वस्य व्यतिरेकं ख्यापयसे। (कुहूरिति शब्दः मुखे यस्य स कुहूमुखः) कथं स तमुद्भावयतीत्याह— ते भृत्याः, वयं तु तान् बिभृमः। ते पिकाः अस्माकं सेवकाः, तान् वयं पोषयामः आहारादिना—इति। भृत्येभ्यः स्वामिनः उत्कृष्यन्ते किल। इमे क्षुद्राः, वयं बृहन्तः। इमे कोकिलाः अल्पाः गात्रेण, वयं तु स्थूलाः। पक्षवतां जातौ अमी कलकण्ठाः वयं कालकण्ठाः। कलः मधुरः कण्ठः एषामिति कलकण्ठाः। पक्षिणां कुले कोकिलाः कलकण्ठा इति प्रथन्ते। वयं तु कालकण्ठा इति प्रसिद्धाः। एवं च आकाराधिक्येन वयमेव उत्कृष्टा इति। आस्तां तावदियं कथा। कदा खलु भवान् कण्ठे पञ्चमं स्वरं पातयिता? तव कण्ठे कदा वा पञ्चमं स्वरमुत्पादयसि? तदभावे उत्कर्षकथाविस्तरो व्यर्थ एवेति भावः।

एवं काककोकिलावपदिश्य नृपकवी उद्दिशति। हे नृप, एते कवयः अस्माभिः भ्रियन्ते वयमेषां स्वामिनः, एते अकिञ्चना वयं भूमण्डलाधिपतयः—इत्यादिरीत्या वृथा गर्वं किमुद्वहसि? किं कदापि त्वं कवय इव हृद्यं पद्यं रचयितुं समर्थोऽसि इति।

उपदेशस्तु लोके साधारण्येन श्रीमन्तः स्वाश्रितेभ्यः स्वीयमुत्कर्षमुद्घाटयितुकामाः सन्ति। तेष्वपि आश्रितेषु स्थिताः विद्याः राजसु न भवन्ति तद् गणयित्वा राजभिः गर्वः त्यक्तव्य इति।

८४

अथ कोकिलमपदिश्याह—

केनाध्यापितमास्थितं क्वनु कदाधीतं क्व वावर्तितं
तद्विश्राम्यतु कुत्र जातमथ कैः पुष्टं तदालोच्यताम्।
काले सोऽपि कुहूमुखो यदि जगत्कर्णामृतं कूजति
प्राग्जन्मार्जितभाग्यवैभवमिदं कः स्तोतुमीष्टे कविः?॥

Who taught (the cuckoo to sing)? Where did (the cuckoo) stay? Where did he repeat (the songs for learning by heart)? Let that rest for a while. Think for a while, where he was born and who brought him up. If, even that cuckoo sings (as though he showers)

nectar in the ears of the world, it is only the splendour (good result) of the merit that was earned in his previous births.

कोकिलो मधुरं गानं करोति। किन्तु तद्गानं, केन अध्यापितम्? को वा तं गातुमध्यापयत्? क्व नु आस्थितम्? कस्मिन् वा प्रदेशे तस्मिन् काले तेन उषितम्? कदा अधीतम्? कस्मिन् वयसि तेन अध्ययनं कृतम्? क्व वा आवर्तितम्? क्वोपविश्य अधीतपाठदार्ढ्याय अभ्यासः कृतः? तद्विश्राम्यतु। तत्सर्वमेकत्र तिष्ठतु। कुत्र जातम्? कस्मिन् प्रदेशे तेन जन्म लब्धम्? अथ कैः पुष्टम्? जन्मानन्तरं कैरस्य पोषणं कृतम्। तदालोच्यताम्। असौ काकनीडे जन्म अलभत, काकैरेव पोषितः—इत्येतत् सम्यग् विचार्यताम्। सोऽपि कुहूमुखो काले जगत्कर्णामृतं कूजति। तादृशोऽपि कोकिलो वसन्तसमये भुवनश्रवणपीयूषायमाणं शब्दं करोति। यद्येवं, प्राग्जन्मार्जितभाग्यवैभवमिदम्। पूर्वजन्मसम्पादितपुण्यस्य परिपाक एवैषः। इदं कः कविः स्तोतुमीष्टे? एतादृशं विशेषं को वा कविः वर्णयितुं शक्नोति? न कोऽपीति यावत्।

एवं कोकिलमपदिश्य प्रतिभाविशेषशालिनं कमपि कलाकारमुद्दिशति। स हि बाल्ये पितृभ्यां वियुक्तोऽपि, दारिद्र्याभिभूतोऽपि, अनध्यापितोऽपि, कलागन्धानभिज्ञैः

पोषितोऽपि, काले समुचिते स्वीयां नैसर्गिकीं प्रतिभां प्रदर्शयति तत्र पूर्वजन्मसुकृतमेव कारणम्-इति ।

उपदेशस्तु पुष्पाणां सौरभमिव, प्रतिभाशालिनां प्रतिभाविशेषः विरुद्धैर्बहुभिः कारणैः अभिभूयमानोऽपि युक्ते काले पुण्यपरिपाकप्रभावेण विजृम्भत एवेति ।

८५

अथ वृश्चिकमपदिश्याह—

कीटः कश्चन वृश्चिकः, कियदयं प्राणी, कियच्चेष्टते

को भारो हननेऽस्य जीवति स वा कालं कियन्तं पुनः ।

नाम्नोऽप्यस्य कियद् बिभेति जनता, दूरे कियद्धावते,

किं ब्रूमो गरलस्य दुर्विषहतां पुच्छाग्रशूकस्पृशः ॥

The scorpion is, after all, an insect. How big an animal is it? How much can it act? What trouble does it take to kill it? And, how long does it live? (These facts notwithstanding), how much are the people afraid of even its name? How far (also the people) run away from him? How can we describe, the unbearableness of the venom that is present in the thorn at the end of (the scorpion's) tail?

वृश्चिकः कश्चन कीटः । वृश्चिक इति प्रसिद्धः विषजन्तुः कोऽप्यल्पः कीटः । कियदयं प्राणी? अस्य

गात्रं किंपरिमाणकम्? अतिह्रस्वाकारमेव। किंयच्चेष्टते? किय॥ अस्य कीटस्य चेष्टा? अत्यल्पैव। अस्य हनने को भारः? वृश्चिकस्य संहारे किं वा कष्टम्? गृह-संमार्जन्यापि तं हन्तुं शक्यते। कियन्तं कालमयं जीवति? कियन्तं समयं वा वृश्चिकः प्राणान् धारयति? द्वित्रान् मासानेव, नाधिकम्। तथापि, अस्य नाम्नोऽपि जनता कियत् बिभेति? साक्षाद् दर्शनाद् भीतिरस्तु नाम, नामश्रवणमात्रेणापि जनाः संत्रस्यन्ति। दूरे कियद् धावते? वृश्चिकसंभावनापि यस्मिन् स्थले, तस्माद् दूरं पलायन्ते। पुच्छाग्रशूकस्पृशः गरलस्य दुर्विषहतां किं ब्रूमः? वृश्चिकपुच्छस्य अग्रभागे स्थितो यः कण्टकः, तत्र विद्यमानस्य विषस्य सोढुमशक्यतां कियद्वा वर्णयेम? तस्य विषस्य महिम्ना खलु अल्पगात्रात्, क्षीणचेष्टात् ह्रस्वजीवितादपि वृश्चिकात् सर्वो लोको बिभेति—इत्यर्थः।

एवं वृश्चिकमपदिश्य कमपि दुर्जनमुद्दिशति। स हि अल्पः, क्षुद्रचेष्टः अनतिकालजीवितश्च। तथापि तस्य रसनायां यत् सकलजनयातनाजनकं वचो वर्तते, तस्माद् बिभ्यतः सर्वे दूरं धावन्तीति।

उपदेशस्तु क्षुद्रेषु जन्तुषु दैवेन निहितं वेदनाजनकं विषादिकं यथा जनोद्वेगकारि, तथा दुर्जनानां वचोऽपि—इति।

अथ वसन्तमपदिश्य वदति—

किं चन्द्रो न पुरा बभूव ? किमिमे वृक्षाः पुरा नाभवन् ?

किं सृष्टा अधुना पिकाः ? मधुकरा अद्योदपद्यन्त किम् ? ।

साहङ्कारममुं प्रपञ्चमखिलं भोक्तुं यदा प्राणिनां

प्रासीदद् द्रुहिणस्तदा समुदभूदाश्चर्यचर्यो मधुः ॥

Was the moon not present (in the world) before? Did the trees not exist before? Were the cuckoos created just now? Did the honeybees take birth only today? (Certainly not). When the creator was pleased (to grant the world the opportunity) to enjoy the whole world with pride, then did the spring, with miraculous feats, appeared.

चन्द्रः पुरा न बभूव किम् ? वसन्तप्रादुर्भावात् प्राक् सकलजगदाह्लादनः इन्दुः लोके नाभूत् किम् ? अभूदेव । पुरा इमे वृक्षाः नाभवन् किम् ? पूर्वं तावदमी अनेकपुष्पभरिताः तरवः नासन् किम् ? आसन्नेव । किं पिकाः अधुना सृष्टाः ? कोकिलाः मञ्जुलगानशीलाः इदानीं विधात्रा उत्पादिताः किम् ? न, पूर्वमेव ते तेन सृष्टाः । मधुकराः अद्य उदपद्यन्त किम् ? भ्रमराः अस्मिन्नेव दिने

अजनिषत किम्? नैव। तेऽपि प्रागेव उत्पन्नाः। तर्हि कथमिव झटिति लोके महत् परिवर्तनम्? कथं सर्वेषां जनानां भोगासक्तिः? कथमिव सर्वत्र शृङ्गारस्य साम्राज्यं प्रवर्तते? इत्यत आह-अमुमखिलं प्रपञ्चं साहंकारं भोक्तुं प्राणिनां यदा द्रुहिणः प्रासीदत्, तदैव आश्चर्यचर्यो मधुः समुदभूत। इदं विविधाकारं जगत् साभिमानमनुभवितुं जीविनां विषये यदा सृष्टिकर्ता प्रसन्नो भूत्वा अन्वग्रहीत्, तदैव विस्मयजनकाचारः वसन्तः प्रादुरासीत्। ब्रह्मा किल कदाचन चिन्तयति- "सर्वेऽमी जन्तवः प्रपञ्चमिमं सम्यग् भुञ्जताम्" इति। तदा स मधुं समुद्भावयति। तेन चन्द्रस्य चन्द्रिका, तरूणां पुष्पोत्करः, पिकानां कुहूरवः, मधुकराणां झङ्कारः— इत्येतत् सर्वं जनानामानन्ददायकं भवतीति।

एवं वसन्तमपदिश्य कविर्नीलकण्ठः यौवनमुद्दिशति। यौवनं खलु यदा भगवान् प्राणिनामनुगृह्णाति, तदा सकलं विश्वं द्रागेव रूपान्तरं धारयति। सर्वाणि वस्तूनि पुरापि आसन्नेव, तथापि कालविशेषे महिमातिशयं तानि आसादयन्तीति।

उपदेशस्तु वस्तूनां गुणपारम्यं भगवदनुगृहीते समयविशेष एव ज्ञायते। साधारणमपि वस्तु तदनुग्रहपात्रं प्राणिनां भोगसाधनतामुपैतीति।

अथ मेघमपदिश्याह—

आयासानविचिन्तयन्नगणयल्लाँभं ततः किञ्चिद-

प्यम्भो मुञ्चति कीर्तिमात्रशरणो धाराधरः सर्वतः ।

तद्यत्नादुपयुज्य वर्धयतु वा दातुर्यशः शाश्वतं

मौढ्यादेतदुपेक्ष्य नाशयतु वा लोकः प्रमाणं ततः ॥

Without considering the stress and strain, without also caring for any profit, the cloud releases lots of water everywhere for just reputation's sake. It is left to the world either to utilise that rain and thus enhance the fame of the giver or to destroy (his fame) by neglecting (the gift) foolishly.

धाराधरः सर्वतः अम्भो मुञ्चति । जलधरः सर्वत्र, भूमौ वारि वर्षति । कीदृशो धाराधरः ? आयासानविचिन्तयन् । समुद्रागमनजलस्वीकरणतदानयनवितरणादिकं श्रममविचारयन् । (लक्षणहेत्वोः क्रियायाः इति शतृप्रत्ययः) तथैव ततः किञ्चिदपि लाभमगणयन् । तस्मात् कार्यादल्पमपि प्रतिफलमनपेक्षमाणस्सन् । तर्हि कुतः करोति ? तत्राह—कीर्तिमात्रशरणः कीर्तिरेव । कीर्तिमात्रं, तत् शरणं ध्येयं यस्य तादृशः । यशोमात्रेच्छुः इति

यावत् । लोकः यस्मात् तदुपयुज्य दातुः यशः शाश्वतं वर्धयतु वा । तथा वृष्टं जलं जनः सप्रयत्नमुपयुज्य प्रदातुः कीर्तिं नित्यं समेधयतु वा । एतत् मौढ्यादुपेक्ष्य नाशयतु वा । मौर्ख्यादज्ञानाद्वा तदम्भः अवज्ञाय प्रदातुः कीर्तिं निरस्यतु वा । ततो लोकः प्रमाणम् । लोक एव विचारयत्वत्र यदि मेघस्य कोऽपि दोषोऽस्तीति ।

एवं मेघमपदिश्य कमपि स्वार्थरहितं गुरुमुद्दिशति । स सर्वेषु विद्यार्थिषु समानवात्सल्यः ज्ञानं वर्षति ग्रहीतारः श्रद्धया तां विद्यामभ्यस्य सदुपयोगेन गुरोः कीर्तिं वर्धयन्तु वा, उपेक्षया तां विद्यामनादृत्य तत्कीर्तिं नाशयन्तु वा । लोक एवात्र प्रमाणम्—इति ।

उपदेशस्तु महान्तः स्वक्लेशानविचारयन्तः, लाभलोभविनिर्मुक्ताः सन्तः, कीर्तिरक्षणमात्रापेक्षिणः स्वधनं सर्वत्र वितरन्ति । श्रद्धया तदुपयुज्यतां वा, उपेक्षया नाश्यतां वा, तत्र लोकः स्वयं प्रमाणम्—इति ।

८८

अथ नकुलानपदिश्याह—

वृत्तिं वर्तयितुं निजां विषहरा गृह्णन्तु सर्पान्नराः
गृह्णन्तु क्षुधितास्तदेकविहिताहारा मयूराश्च वा ।
नाजिघ्रन्ति च ये कदापि नकुलास्ते हन्त किं कारणं
दर्शं दर्शमनुद्रवन्ति भुजगान् द्वेधा च विच्छिन्दते ?

Let the snakecharmers catch the serpents in order to earn their livelihood. Let also the hungry peacocks, which live mainly on the snakes, catch them (for food). What reason is there when the mongooses, which never even smell the serpents, chase them whenever they are seen and also cut them into pieces?

विषहरा नराः निजां वृत्तिं वर्तयितुं सर्पान् गृह्णन्तु। विषवैद्याः स्वीयां जीविकामार्जयितुं नागान् निबध्नन्तु नाम। विषहरणं कुर्मः इत्यादि वदन्तो ह्याहितुण्डिकाः पेटिकासु द्वित्रान् सर्पान् निक्षिप्य ग्रामाद् ग्रामं व्रजन्तः, जनेभ्यः तान् प्रदर्श्य स्वल्पं धनं सम्पाद्य स्वजीवनं संसाधयन्ति। स्वजीविकायै यस्मात्ते सर्पग्रहणं कुर्वन्ति, तस्मात् तन्न्याय्य-मेव। वा तदेकविहिताहारा मयूराश्च गृह्णन्तु। अथवा सर्पमुख्याहाराः शिखिनः तान् गृहीत्वा भक्षयन्ति। तदस्तु नाम! ये नकुलाः कदापि नाजिघ्रन्ति, ये पिङ्ग-लाख्याः प्राणिनः सर्पाणां गन्धमपि नापेक्षन्ते, ते दर्शं दर्शं भुजगान् अनुद्रवन्ति। यत्र यत्र वापि सर्पो दृश्य-ताम्, तत्र तत्र तमनुसृत्य धावन्ति। द्वेधा च विच्छिन्दते। क्रकचोपमैः दन्तैः सर्पान् द्विधा च खण्डयन्ति। किं कारणम्? प्रयोजनं किमपि अनुद्दिश्यैव एते नकुलाः

सर्पानेवं हिंसति यत्, तत्र को वा हेतुः ? न कोऽपि प्रतिभातीत्यर्थः ।

एवं नकुलानपदिश्य अरसिकान् काव्यवाचकान् उद्दिशति । ये पण्डिताः काव्यवाचनादिना जीविकामार्जयितुमिच्छन्ति, ते काव्यं पठन्तु । ये तु कवयो मुख्यतया काव्यमेव जीविताधारं मन्यन्ते, तेऽपि काव्यमाश्रयन्तु नाम । ये तु अरसिकाः काव्यस्य गन्धमपि नाघ्रातुमिच्छन्ति, तैर्हठात् यत् काव्यं पठ्यते, यदपि अस्थाने पदविच्छेदादिना खण्ड्यत इव तत्र किं कारणम् — इति ।

उपदेशस्तु नीचाः यदा कमपि हिंसन्ति, तत्र प्रयोजनं न गवेषयन्ति । ते निरर्थकमेव परान् घ्नन्ति —इति ।

८९

अथ हरिणानपदिश्य ब्रूते —

खादन्ति क्षुधितास्तृणानि तृषिता गृह्णन्त्यपो निर्झरे
सीदन्तो गिरिकन्दरासु हरिणा येऽमी क्वचिच्छेरते ।
व्याधव्याघ्रदवानलप्रभृतयः तेष्वेव संनाहिनः
तद्वा तिष्ठतु, घातयन्ति मुनयोऽप्येतान् कथं चर्मणि ॥

The deer eat the grass when they are hungry. They get water from the streams when they are thirsty. When

they become tired, they sleep somewhere in the valleys of hills. Hunters, tigers, wildfires, etc. are always after those (poor animals). Leave that alone, how is it that even the hermits kill them for their skin?

ये अमी हरिणाः, इमे प्रसिद्धाः एणाः ये सन्ति, ते क्षुधिताः तृणानि खादन्ति। क्षुधा बाधिताः सन्तः तृणानि भक्षयन्ति। न तु अन्यान् प्राणिनः हिंसन्तीति यावत्। तृषिताः निर्झरे अपः गृह्णन्ति। पिपासिताः सन्तः नद्यां वा झरे वा क्वचित् जलं पिबन्ति। सीदन्तः गिरिकन्दरासु क्वचित् शेरते। श्रान्ताः भूत्वा रात्रौ गिरीणां कन्दरासु क्वापि स्वपन्ति। तेष्वेव व्याधव्याघ्र-दवानलप्रभृतयः संनाहिनः। तादृशेषु निरपराधेषु मृगेष्वेव लुब्धकाः, तरक्षवः, दावाग्न्यादयश्च संनह्यन्ति सन्ततम्। तान् हन्तुमेते सर्वे सदा उद्यमशीला इति यावत्। तद्वा तिष्ठतु। करुणाहीनहृदयानां व्याधानां, मांसभक्षकाणां व्याघ्राणां, चेतनाशून्यानां दवानलादीनां च कथा आस्तां तावत्। मुनयोऽपि एतान् चर्मणि कथं घातयन्ति? तपश्शीलाः शमदमादिसम्पत्तिशालिनः ऋषयोऽपि अजिनार्थं हरिणान् निघ्नन्ति खलु। चर्मणीत्यत्र निमित्तात् कर्मयोगे इति सप्तमी। मुनिकर्तृकं हरिणकर्मकं चर्मनिमित्तकं

घातनमिति यावत् । एतत् कथं वा सोढव्यम् ? अहो शोचनीयता हरिणानाम्—इत्यर्थः ।

एवं हरिणानपदिश्य सज्जनानुद्दिशति । ते हि यदृच्छालाभसन्तुष्टाः, कस्यापि कामपि पीडां न जनयन्ति । तेष्वेव घोरा राजानः, चोराः, उत्पाताश्च संनाहिनः । आस्तामिदं नाम । शमधना मुनयोऽपि तेभ्यः कुप्यन्तः शापादिदाने प्रवर्तन्ते, हन्त—इति ।

उपदेशस्तु सत्पुरुषाणां जगति निष्कारणवैरिणो बहवो भवन्तीति ।

९०

अथ मृगराजं सिंहमपदिश्याह—

घ्नन्त्येकत्र तरक्षवो मृगकुलं दावा दहन्त्यन्यतो
व्याधा वीतभयाः परत्र शतशो विध्यन्ति गृह्णन्ति च ।
किं त्वं वेत्सि कथामिमां मृगपते निद्रासि कोणे क्वचित्
दिष्ट्या चेदवबुध्यसे शमयसि द्वित्रान् वृथा दन्तिनः ॥

Hyeans kill the deer somewhere. The wild fires also burn them down some where else. Besides, the intrepid hunters shoot and catch them in hundreds. O lion, you know nothing about this story and sleep in some corner. If you by chance get up, you

finish two or three tuskers for no reason.

मृगकुलं तरक्षवः एकत्र घ्नन्ति। हरिणान् मृगादनाख्यया प्रसिद्धाः जन्तवः एकत्र संहरन्ति। अन्यतो दावा दहन्ति। यदि तरक्षुभ्यः आत्मानं रक्षन्ति मृगाः, तर्हि दवदहनाः तान् भस्मीकुर्वन्ति। परत्र वीतभयाः व्याधाः शतशः विध्यन्ति गृह्णन्ति च। अवशिष्टान मृगान् निर्भीकाः लुब्धकाः बाणैः विध्यन्ति, जालैर्वा गृह्णन्ति। हे मृगपते! मृगाणां नाथ इति नाम धारयन् सिंह! किं त्वं कथामिमां वेत्सि? तव प्रजानां दारुणां वार्तामिमां त्वं जानासि किम्? नैव। कुतः? कचित् कोणे निद्रासि। गुहायाः कस्मिंश्चित् भागे स्वपिषि। अतः कानने जायमानो वृत्तान्तः तव मतिपथं नारोहति। दिष्ट्या अवबुध्यसे चेत्, वृथा द्वित्रान् दन्तिनः शमयसि। सुदैवात् कदापि जागर्षि चेत्, व्यर्थमेव द्वौ वा त्रीन् वा गजान् निहंसि। मृगपतेस्तव कार्यं मृगशत्रूणां निर्मूलनम्। तन्न करोषि। अनपराधान् गजान् मारयसि। अहो, तव मृगपतित्वं न साम्प्रतम्—इति।

एवं सिंहमपदिश्य क्रमप्याधिकारिणमुद्दिशति। हे अधिकारिन्! त्वयि क्वापि लोकं विस्मृत्य तिष्ठति, नृशंसाः चोरादयः प्रजाः पीडयन्ति। ईतयः बाधन्ते। रोगा

हिंसन्ति । त्वं तं वृत्तान्तं न वेत्सि । यदा तु कदाचित् कुप्यसि, कानपि अनपराधान् दण्डयसि—इति ।

उपदेशस्तु राजादयः प्रजासु कष्टानि अनुभवन्तीषु तत्र अवधानमेव न ददति । कदाचन केनापि प्रचोदिताः-तेऽन्यं कमपि महाकारं शिक्षयन्ति । न तेन प्रयोजनमस्तीति ।

९१

अथ महाकारं गजराजमपदिश्य कथयति—

दुर्धर्षोऽसि वनेचरोऽसि क इदं नेत्याह किं तु स्वतो
जानीषे न हिताहितं न खलु तज्जिज्ञाससे वाऽन्यतः
तद् गृह्णन्ति नियन्त्रयन्ति निगलैस्त्वां ताडयन्त्यङ्कुशैः
आरोहन्ति च वारणेन्द्र मशकप्राया मनुष्या अपि ।

O King of elephants, you are inaccessible and roam in jungles. None denies this. But, you can't understand the good and the bad yourself. Also, you don't even like to know them from others. As a result, even the men, who are mere mosquitoes when compared to you, catch you, bind you with chains, prick you with goads and also ride on you.

हे वारणेन्द्र, हे गजराज ! दुर्धर्षोऽसि । त्वं धर्षितुमशक्योऽसि । (ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्) वनेचरोऽसि । अरण्यसंचारशीलोऽसि (हलदन्तात् सप्तम्याः संज्ञायाम्—इति अलुक् । चरेष्टः) इदं न—इति क आह ? इदमित्थं न वर्तते इति को वा ब्रूते ? (ब्रुवः पञ्चानामादित आहो ब्रुवः) न कश्चिदपि तव दुर्धर्षत्वे वा वनेचरत्वे वा विवदते । किन्तु स्वतो हिताहितं न जानीषे । परं तु तव हितं किम् ? अहितं किम् ? इति ज्ञातुं त्वं न प्रभवसि । अन्यतो वा तन्न जिज्ञाससे । अन्यस्माद् वा तद् ज्ञातुं न इच्छसि (ज्ञाश्रुस्मृदृशां सनः इत्यात्मनेपदम्) ततः किं जातमित्यत आह—मशकप्राया मनुष्या अपि त्वां गृह्णन्ति । त्वया तुलनायां क्रियमाणायां ये मानवा मशका इव, तेऽपि त्वां गर्तेषु पातयित्वा निगृह्णन्ति । निगलैः नियन्त्रयन्ति । शृङ्खलाभिः निबध्नन्ति । अङ्कुशैः ताडयन्ति । तोदकाख्येन अल्पशस्त्रेण त्वां हिंसन्ति च । आरोहन्ति च । तवोपरि उपविश्य प्रयान्ति च इति ।

इत्थं गजराजमपदिश्य कमपि शरीरेण बलवत्त्वेऽपि बुद्ध्या दुर्बलमुद्दिशति । हिताहितं ज्ञातुमशक्नुवता, अन्यानपृच्छता तेन प्राप्तव्योऽभिभवः अल्पेभ्योऽपि । तं वञ्चनाजाले निपात्य सर्वे हिंसन्तीति ।

उपदेशस्तु शारीराद् बलाद् बौद्धं बलं समर्थतरम् । बुद्धिबलहीनाः स्वहिताहितं बुद्धिमत्तरेभ्यः जानीयुः । अन्यथा ते अल्पैरपि अभिभूयन्ते इति ।

९२

अथ पुनः गजमेवापदिश्याह—

अह्नस्त्रिचतुरम्बुभि स्नपयसि स्वं पुष्करावर्जितैः
भुङ्क्षे मेध्यतराणि भद्र तरुणान्यश्वत्थपत्राणि च ।
पुण्यारण्यचरोऽसि न प्रविशसि ग्रामं सकृत् कुञ्जर !
ज्ञानं चेत् कियदप्युदेति न समा ब्रह्मर्षयोऽपि त्वया ॥

O elephant, you drench yourself with the water sprinkled by your trunk twice or thrice a day. Dear, you eat the young sacred leaves of the peeple tree. You roam in aspicious forests and never enter villages. If only a bit of knowledge you had earned, not even the great sages could ( be considered ) your equals.

हे कुञ्जर, हे गज ! पुष्करावर्जितैरम्बुभिः स्वमह्नः त्रिः चतुः स्नपयसि । शुण्डया प्रेरितैः जलैः शरीरं दिने त्रिवारं चतुर्वारं वा आर्द्रयसि । प्रतिदिनं त्रिः चतुर्वा स्नासीति यावत् । (त्रिः चतुः इत्यत्र कृत्वसुचोऽपवादः

सुच्, द्वित्रिचतुर्भ्यः सुच्, इत्यनेन) हे भद्र, मङ्गलकर ! मेध्यतराणि तरुणानि अश्वत्थपत्राणि भुङ्क्षे । पवित्रतराणि कोमलानि अश्वत्थस्य पर्णानि भक्षयसि । पुण्यारण्यचरोऽसि । सुकृतमये नैमिषादौ वने सञ्चरणशीलोऽसि । सकृत् ग्रामं न प्रविशसि । एकदापि जनवसतिं ग्रामादिकं न गच्छसि । चेत् तव ज्ञानं कियदपि उदेति, ब्रह्मर्षयोऽपि त्वया न समाः । अस्य सर्वस्य सदाचारस्य फलं ज्ञानम् । तत् लेशतोऽपि यदि तव जायेत, तर्हि ब्रह्मज्ञाः ऋषयोऽपि तव न तुल्याः स्युः । हन्त, ज्ञानं तु तव किमपि नोत्पद्यते । सर्वं ज्ञानं व्यर्थमेव तस्माद् गणनीयं भवतीत्यर्थः ।

एवं कुञ्जरापदेशेन कमपि अन्धाचारनिष्ठं ज्ञानहीनं समुद्दिशति । स खलु सम्प्रदायबद्धः दिने त्रिः चतुर्वा स्नाति, पवित्रमेव आहारं भुङ्क्ते जनसंसदि न मिलति ध्यानार्थमेकान्तवासी भवति च । तथापि यदर्थमेतत्सर्वं कृतं, तस्य ज्ञानस्य अनुत्पत्तौ सर्वमेव व्यर्थमिति ।

उपदेशस्तु ज्ञानस्य कृते विविधानि कर्माणि उच्चावचा आचाराश्च शास्त्रेण विहिताः । ज्ञानस्य अलाभे श्रद्धया कृतमपि एतत् सकलं निष्प्रयोजनमेव—इति ।

अथ कपटाग्रण्यं सृगालमपदिश्याह—

हन्यन्ते कति जन्तवो वनचरैर्नित्यं कति श्वापदैः
गृह्यन्ते कति कूटयन्त्ररचनैः क्षोणीभृतां प्रीतये ।
एतावत्यपि विप्लवे न भजसे कस्यापि दृग्गोचरं
स्वच्छन्दश्च सृगाल ! खेलसि पुनस्तुल्यं वनग्रामयोः ॥

Many animals are killed every day by hunters and many others by predacious beasts. For the enjoyment of kings too, many of them are caught by means of deceitful devices. O Jackal, notwithstanding all this trouble, you are never sighted by any one. Also, you play equally in both the jungle and the countryside at your pleasure.

कति जन्तवो नित्यं वनचैरर्हन्यन्ते । प्रतिदिनं वनेचराः कति प्राणिनो घ्नन्ति ? असंख्यान् । कति जन्तवः श्वापदैः हन्यन्ते ? कति वा मृगादयः हिंस्रपशुभिः व्याघ्रादिभिः मार्यन्ते ? भूयासः । क्षोणीभृतां प्रीतये कूटयन्त्ररचनैः कति गृह्यन्ते ? पृथ्वीपालकानां संतोषाय कियन्तः प्राणिनः कपटजालैः कृत्रिमगेहाकारपेटिकादिभिः गृह्यन्ते ? भूयिष्ठा एव । हे सृगाल, एतावत्यपि विप्लवे

कस्यापि दृग्गोचरं न भजसे। भो वञ्चक, एतावत्यपि क्लेशे जन्तूनां विद्यमाने कस्यापि व्याधस्य, व्याघ्रस्य जालिकस्य वा नयनविषयो न भवसि। पुनश्च स्वच्छन्द वनग्रामयोस्तुल्यं खेलसि। स्वेच्छया कानने जनावासभूते ग्रामे च समं विहरसि। त्वमेव धन्यः—इति।

एव सृगालमपदिश्य कमपि वञ्चकमुद्दिशति। बहवो जना राजभिः युद्धेषु प्रेष्य हन्यन्ते। अन्ये चोरादिभिः मार्यन्ते। इतरे राजभिः सेवार्थं गृह्यन्ते। अयं तु वञ्चकः कस्यापि गोचरो न भवति। तुल्यं च नगरेषु ग्रामेषु अन्यत्र वा विहरतीति।

उपदेशस्तु कपटमार्गानुयायिनः सर्वस्मादात्मानं रक्षन्तः सर्वत्र विहरन्ते। अन्ये कियन्तमपि क्लेशमनुभवन्तु नाम, ते सुखमेव जीवन्ति, न केनापि ज्ञायन्त इति।

९४

अथ स्वर्गमपदिश्याह—

अस्ति स्वर्णमयोऽद्रिरस्ति विषयः क्षुत्तृड्जरावर्जितः
सन्ति क्षीरघृताकरा जलधयः सन्ति द्रुमाः कामदाः।
किं नस्तच्चरिताद्भुतश्रवणतः साध्यं क्षुधा ताम्यतां?
दृष्टं यत्सविधे विधेहि सुमते तत्रैव सर्वं श्रमम्॥

There is a golden mountain somewhere. There is also a world which

is free from hunger, thirst and oldage. There are oceans which are the repositories of milk and ghee (melted butter). There are also trees which grant all wishes. What is to be achieved from hearing such accounts of miracles by us who are languishing with hunger? Wiseman, exert yourself fully only in that which is seen nearby.

अस्ति स्वर्णमयः अद्रिः । हेममयः पर्वतो वर्तते, मेरुरिति प्रसिद्धः क्वापि दूरे । (मेरुस्सुमेरुर्हेमाद्रिः— इत्यमरः) क्षुत्तृड्जरावर्जितः विषयः अस्ति क्षुधया पिपासया जरया च रहितः देशः स्वर्गाख्यः वर्तते (उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके— इति कठोपनिषत्) क्षीरघृताकराः जलधयः सन्ति । दुग्धस्य आज्यस्य च समुद्राः वर्तन्ते । कामदाः द्रुमाः सन्ति । सर्वेष्टदाः वृक्षाः वर्तन्ते । क्षुधा ताम्यतां नः तच्चरितद्भुतश्रवणतः किं साध्यम् ? वयं सदा क्षुधया बाध्यामहे । तादृशानामस्माकं विस्मयजनकानां सुवर्णशैलादीनां वृत्तान्तस्य श्रवणेन प्रयोजनं किमस्ति ? न किमपि । न खलु लोकातिक्रान्तवस्तुचिन्तया क्षुधादीनां निवारणं भवति । तस्मात् किं वा कर्तव्यमित्यत आह—सुमते । यत् सविधे दृष्टं तत्रैव सर्वं श्रमं

विधेहि ' चतुरबुद्धे । यत्समीपे प्रत्यक्षं, तस्मिन्नेव सफलप्रयत्नं कुरु । तव शक्ति कर्णमात्ररसायनेषु अदृष्टेषु मोपयुङ्क्थाः इति ।

इत्थ स्वर्गमपदिश्य अगम्येषु प्रदेशेषु स्थितं धनं सम्पादयितुकामान् उद्दिशति । दूरतः पर्वतो रम्य इति न्यायेन सर्वं विप्रकृष्टं रमणीयं भाति । तत्प्राप्यते न वेति न ज्ञायते । अतः स्वदेश एव साधनीयं साधय—इति ।

उपदेशस्तु प्रत्यक्षे वस्तुन्येव श्रमः कार्यः । परोक्षं कथासु अद्भुतं श्रूयते, तेन प्रयोजनं नास्तीति ।

९५

अथ वेधसमपदिश्याह—

अस्त्यत्रैव किलार्णवे तदमृतं तत्रैव हालाहलः
सन्त्यस्मिन् मलये पटीरतरवस्तत्रैव वाताशनाः ।
यद्यद्वस्त्वभिजातमस्ति सविधे तत्तद्दुरापं नृणां
प्रासव्यं रसनाञ्चलो करतले भाले च वेधा न्यधात् ॥

Here, in the ocean, is the divine nectar. (But,) there is also the fuming poison. The sandal trees are (in plenty) in the Malaya mountain. (But,) serpents too (are present) there. What ever desirable thing exists nearby is very difficult for men to lay hands on. What has to be obtained, however,

has been put by the creator on the tip of the tongue, in the palm of the hand and in the forehead.

अत्रैव किलार्णवे अमृतमस्ति । समीपस्थ एव समुद्रे पीयूषं वर्तते । किन्तु—तत्रैव हालाहलः । अमृतेन सहैव कालकूटविषमपि विद्यते । अस्मिन् मलये पटीरतरवस्सन्ति । प्रत्यक्षे मलयपर्वते एव चन्दनवृक्षा भूयांसो भवन्ति । किन्तु—तत्रैव वाताशनाः । तेषु वृक्षेष्वेव विषमयाः सर्पा अपि वर्तन्ते । सविधे यद्यद् अभिजातं वस्तु अस्ति, नृणां तत् तद् दुरापम् । समीपे यद्यत् श्रेष्ठं वस्तु विद्यते, तत्तत् मनुष्याणां दुर्लभमेव । श्रेष्ठेन वस्तुना सह भयोत्पादकस्यापि विद्यमानत्वात् । वेधाः प्राप्तव्यं रसनाञ्चले करतले भाले च न्यधात् । जिह्वाग्रे, हस्ततले, फालपट्टे च मनुष्येण लब्धव्यं ब्रह्मा निहितवान् । जिह्वया यद् वदति, हस्तेन यत्करोति च, नैतयोः फलं साक्षाल्लभ्यते, तस्य भालेऽपि यदि ब्रह्मलेखो वर्तते, तदैव तत्प्राप्तिः भवति । अत एव यद्वस्तु सविधेऽपि दृश्यते, न तत् हस्तप्राप्यं भवति, हस्तगतमपि रसनापर्यन्तं नायाति । यदि वा, यद् रसनाञ्चले प्राप्तव्यं, तत् वेधाः करतले भाले च न्यधात् । यद् भोक्तव्यं तत्प्राप्तिं करश्रमेण भाललिखितानुसारेण च नियन्त्रितवान् । अत एव तद्दुरापमिति ।

कथं वेत्रममपदिश्य कमपि स्वामिनमुद्दिशति। तस्य स्वामिनः सेवकाः पश्यन्ति सर्वमपि सविधे स्थितम्। तथापि सर्वं दुर्लभमेव तेषामिति।

उपदेशः अर्थान्तरन्यासविधया कविना साक्षादुक्त एव।

९६

अथ कमपि महावृक्षमपदिश्य वदति—

तावच्चैधितमेधितव्यमवनौ यावन्महद्भिर्द्रुमैः
छायाभिः कुसुमैः फलैश्च पथिकाः शक्त्या समाराधिताः।
कालोऽयं मम जीर्यतः पतितुमित्यास्ते तरोराशये
पान्थानां च पतत्त्रिणां च हृदये जातोऽयमस्मिन् क्षणे॥

"I have grown as much as it is fit for great trees to grow in this world. Many travellers have been entertained by me to the best of my ability with shade, flowers and fruit This is the time for me to fall down since I am quite old."—Such thoughts prevail in the bosom of the tree. But, in the hearts of the travellers and the birds, (the feeling is that) the tree was born only in that moment.

अवनौ महद्भिः द्रुमैः यावद् एधितव्यं, तावद् एधितम्। अस्यां भूमौ बृहद्भिः शाखिभिः यावद्

वर्धितव्यं, मया तावती वृद्धिः प्राप्ता । पथिकाः छायाभिः कुसुमैः फलैश्च शक्त्या समाराधिताः । पान्थाः आतप-निवारणेन, पुष्पाणां सौरभेण, क्षुधाशान्त्यर्थैः फलैश्च यथा शक्ति आनन्दिताः । जीर्यतो मम अयं कालः पतितुम् । जराभिभूयमानस्य मम पतनाय योग्योऽयं समयः । (काल-समयवेलासु तुमुन् ।) इति तरोः आशये आस्ते । एवं वृक्षस्य मनसि आलोचना अस्ति । पान्थानां च पतत्रिणां च हृदये " अयमस्मिन् क्षणे जातः " इति आस्ते ये पथिकाः तस्माद् वृक्षात् साहाय्यमलभन्त, ये च पक्षिणः तमाश्रित्य अवर्तन्त, तेषां हृदये तु " अयं वृक्षः इदानीमेव जातः, अयं चिरकालं जीवतु " इत्यास्ते ।

एवं वृक्षमपदिश्य कमप्युदारं राजानमुद्दिशति । महा-पुरुषैः यावत् साधनीयं तावत् साधितम् । धनधान्य-भूम्यादिभिः सज्जनास्तोषिताः । इदानीं राज्यं परित्यज्य वानप्रस्थाश्रमं स्वीकर्तुं, योगेन देहं त्यक्तुं च ममायं समयः—इति स चिन्तयति । प्रजास्तु " अयमचिरात् पूर्वमेव सिंहासनमारूढः, चिरकालं लोकं प्रशास्त्वयमेव " इति भावयन्ति इति ।

उपदेशस्तु महान्तः स्वकर्तव्यपरिपालनानन्तरमेव निर्मोहाः प्रपञ्चं परित्यक्तुमिच्छन्ति । जनास्तान् चिर-कालमत्रैव अपेक्षन्ते—इति ।

९७

अथ खगकुलपतिं गरुडमपदिश्याह—

दृष्टिघ्राणविषान् फणाधरपतीन् अष्टापि दृष्ट्या स्वयं
रोद्धुं द्रावयितुं विनाशयितुमप्यव्याहतप्रक्रमः ।
मार्जारान् नकुलांश्च किं खगपतिः साह्ये वृणोत्यात्मनः
किं प्रत्यर्थिकुलस्य वृत्तिद इति प्रद्वेष्टि वा मारुतम् ?

Does the lord of birds, who possesses unquestionable might to stop, to scare away and even to obliterate all the eight kings of serpents, want the cats and mongooses to help him? Or, does he ever hate the wind (on account of the fact) that it is the life-giver for the family of his enemies?

खगपतिः अव्याहतप्रक्रमः । खे आकाशे गच्छन्तीति खगाः पक्षिणः । तेषां पतिः गरुडः । तस्य प्रक्रमेषु नाम विविधासु गतिषु व्याहतिरेव नास्ति । सः अविघ्न-प्रचारः । किं कर्तुं तस्य प्रक्रमः ? दृष्टिघ्राणविषान् अष्टापि फणाधरपतीन् दृष्ट्या स्वयं रोद्धुं द्रावयितुं विनाश-यितुमपि । केषाञ्चित् खलु सर्पाणां दृष्टावपि विषमस्ति । तैः सर्पैः दृष्टमात्राः प्राणिनो म्रियन्ते । तथा केषाञ्चित् फणिनां घ्राणे विषम् । तैः घ्रातमात्राः प्राणिनः प्राणैः

वियुज्यन्ते । तादृशाः नागाः अष्टौ प्रसिद्धाः तक्षकादयः।
शेषवासुकितक्षाख्याः कर्कजाब्जौ महाम्बुजः ।

शङ्खपालश्च कुलिक इत्यष्टौ नागवर्यकाः ॥ इत्यग्निपुराणे । तानष्टावपि दृष्ट्वैव गरुडः रुणद्धि, विद्रावयति विनाशयति वा । स्वयमेव एतत्सर्वं कर्तुं समर्थः तादृशः खगपतिः आत्मनः साह्ये मार्जारान् नकुलांश्च किं वृणोति ? गरुडः स्वसाहाय्ये बिडालान् पिङ्गलाख्यान् जन्तूंश्च किमपेक्षते ? (नकुलः पिङ्गलोऽथैष कशो रोमशपुच्छकः इति वैजयन्ती) नैव । प्रत्यर्थिकुलस्य वृत्तिद इति मारुतं प्रद्वेष्टि किम् ? प्रतिपक्षभूतानां सर्पाणां वंशस्य जीविकाप्रद इति वायुं द्वेषविषयीकरोति किम् ? (प्रत्यर्थी पर्यवस्थाता प्रतिपक्षो विपक्षकः इति, आजीवो जीविका वृत्तिः इति च वैजयन्ती) नैवेति यावत् ।

एवं गरुडमपदिश्य वादीभसिंह कमपि पण्डितमुद्दिशति । स पण्डितः स्वयमेव विपक्षवादिनो जेतुं समर्थः, सः कथं वान्यान् अल्पान् स्वसाह्ये अपेक्षते ? स्वविपक्षपोषकान् वा कथं द्वेष्टि ? इति ।

उपदेशस्तु स्वयं शक्ताः शत्रुविमर्दने क्षुद्राणां साहायकं नापेक्षन्ते । ते क्षुद्राः " वयं कर्मण्यस्मिन् अस्य सहायाः" इति आत्मप्रशंसां कुर्वन्तु नाम । तथैव स समर्थः प्रतिपक्षसमर्थकानपि न द्वेष्टि—इति ।

अथ नदीः सागरं चापदिश्याह—

अध्वन्यान् कति रुन्धते कति दृढान् भिन्दन्ति तोयाकरान्
केदारान् कति मज्जयन्ति कति च व्यापाटयन्ति द्रुमान् ।
वाहिन्यः क्षणलुप्तवारिविभवा वन्या अवन्यामिमाः
यः सिन्धुः सकलाश्रयः स तु पुनः कुत्रेति न ज्ञायते ॥

These wild rivers, whose grandeur of water-abundance disappears from the world in moments, obstruct many a traveller, destroy many a reservoir, plunge many a field and uproot many a tree. The ocean, who is the substratum of the whole world, never comes to the notice of anybody.

वन्याः वाहिन्यः क्षणलुप्तवारिविभवाः। वने अरण्ये भवाः वन्याः (तत्र भवः इति यत्) वहन्ति तच्छीला इति वाहिन्यः नद्यः। तादृशा नद्यः क्षणमात्रेण नष्टजलसमृद्धयो भवन्ति। वृष्टावतिमात्रायां पतितायां वन्यासु वाहिनीषु महान् प्रवाहो जायते। व्यतीते अल्पीयसि काले तत्र काकपेयमपि तोयं न दृश्यते। तादृश्यो वाहिन्यः किं कुर्वन्तीत्याह—अध्वन्यान् कति रुन्धते। पथिकान् कत्यपि ताः निरुन्धन्ति। कति

दृढान् तोयाकरान् भिन्दन्ति। कत्यपि सुबद्धानपि जलाशयान् विदारयन्ति। केदारान् कति मज्जयन्ति। सस्यपूर्णाः कियतीरपि भूमीः मग्नाः विदधते। कति च द्रुमान् व्यापाटयन्ति। कियतोऽपि वृक्षान् उन्मूलयन्ति। एतद्वैलक्षण्यं तु समुद्रे प्रतिपादयति — यः सिन्धुः सकलाश्रय, स तु पुनः कुत्र इति न ज्ञायते। यः समुद्रः सर्वासामपामाधारः नित्यजलविभवः, स क्व वर्तत इत्यपि जनैर्न ज्ञायते। न खलु स पथिकानां मार्गरोधं वा तोयाकराणां भेदनं वा केदाराणां मज्जनं वा द्रुमाणां व्यापाटनं वा करोति। अतो लोकस्तं कदापि न स्मरतीति।

एवं नदीः सागरं चापदिश्य अल्पविद्यान् क्षुल्लकान्, ज्ञाननिधिं विद्वांसं च उद्दिशति। क्षुल्लकानां पण्डितं-मन्यानां ज्ञानविभवः क्षणमात्रे नश्यति। तावतैव कालेन ते लोके महान्तं विनाशं विदधति। यः सकलानां कलानामाश्रयः स विद्वान् लोकैर्न ज्ञायत एव। तस्य आडम्बरप्रीतिविरहादिति।

उपदेशस्तु नीचानां विभवो लोकनाशाय कल्पते, तथापि सः क्षणिकः। महान्तः सकलविभवाश्रया अपि आटोपाकरणात न प्रसिद्धिमाप्नुवन्तीति।

अथ कूपमण्डूकमपदिश्याह—

का द्यौः किं बलिसद्म का वसुमती स्यात्सर्वमेतद्यदि
प्रत्यक्षं न भवेत् कदाचिदपि किं ते सर्वसंदर्शिनः ?
भ्राम्यन्तः प्रलपन्तु नाम, विदितं मण्डूक सम्यक्त्वया
मुक्त्वेमं परमं कुकूपमितरत् किं नाम संभाव्यते ॥

What is heaven? What is under-world? What is also earth? If all these existed, wouldn't they be even once visible to you, the seer of every thing? Let the wandering folks prattle. O frog, your understanding is perfect; what else can be imagined (in the universe), leaving this super-well?

हे मण्डूक ! हे कूपदर्दुर ! का द्यौः ? स्वर्गो नाम क ? किं बलिसद्म ? पातालं नाम किम् ? का वसुमती ? भूमिर्नाम का ? सर्वमेतद् यदि स्यात् , सर्वसंदर्शिनः ते कदाचिदपि प्रत्यक्षं न भवेत् किम् ? स्वर्गादिकं सकलं वस्तुतो यदि वर्तेत, सर्वसाक्षात्कारिणः तव गोचरे कथं न पतेत् ? यस्मात् त्वया न दृष्टं तस्मान्नास्त्येव तादृशं किमपि । भ्राम्यन्तः प्रलपन्तु नाम । लोके सञ्चरन्तो जनाः किमपि-जल्पन्तु कामम् । त्वया सम्यक् विदितम् । भवता

समीचीनतया ज्ञातमेव। किमिति? इमं परमं कुकूपं मुक्त्वा इतरत् किं नाम सम्भाव्यते? तवाधिष्ठानभूतममुं कुत्सितं कूपं परित्यज्य इतरत् ऊहितुमपि शक्यते किम्? नैव नैव। अस्मात् कूपादन्यन्नास्त्येव लोके—इत्यर्थः।

एवं कूपमण्डूकमपदिश्य कस्मिन्नपि कुदेशे स्थित्वा अन्यत् किमपि राज्यं नास्तीति गल्भमानं राजानमुद्दिशति। स आत्मानं विदितसमस्तप्रपञ्चं मन्यते। कदापि तु स्वस्माद् राज्यादन्यत्र न गतः। साम्राज्यादिकं भुवने किमपि नास्तीति च तस्य अभिमानः इति।

उपदेशस्तु अल्पज्ञाः आत्मनि सर्वज्ञताभिमानेन स्वादृष्टं नास्त्येवेति वदन्ति, न तादृशान् बोधयितुं ब्रह्मापि प्रभवतीति।

अत्र अत्यन्ततिरस्कृतवाच्याख्यो ध्वनिरपि। सर्व-संदर्शिन इति पदं अत्यल्पदर्शिन इति, भ्राम्यन्तः इति पदं लोकतत्त्ववेदिन इति, सम्यक्विदितमिति पदं च भ्रान्तोऽसि इति च वाच्यार्थं तिरस्कृत्य व्यनक्ति।

१००

अथ फणिपतिपर्वतादीनपदिश्याह —

त्वद्गर्भे सुखमासते फणिपतिश्रीकूर्मदिग्दन्तिनः

प्रत्यक्षा कुलभूभृतां स्थितिरपि त्वय्यम्ब सर्वंसहे।

यस्त्वेते बिभृमो वयं भुवमिति स्वं ख्यापयन्ते यशो
निःशङ्कं निरपत्रपं च तदिदं नः कर्णशूलायते ॥

O Mother Earth, the lord of serpents, the aspicious tortoise and the directional elephants live comfortably in your womb. The situation of the great mountains is also evidently in you. But, these are spreading their own reputation proclaiming, without any hesitation or shame, "we are supporting the earth". This (bragging) is torturing our ears like a pike.

हे अम्ब सर्वंसहे! हे मातर्वसुमति। (सर्वं सहत इति सर्वंसहा। पूःसर्वयोर्दारिसहोः, अरुर्द्विषदजन्तस्य मुम्) त्वद्गर्भे फणिपतिश्रीकूर्मदिग्दन्तिनः सुखमासते। तवोदरे सर्पराजादिकूर्मदिग्गजाः सावकाशं निवसन्ति। त्वयि कुलभूभृतां स्थितिरपि प्रत्यक्षा। भवत्यामेव महान्तः पर्वताः तिष्ठन्ति सर्वेषां दृग्गोचरगतमेव। तथापि, 'वयं भुवं बिभृमः' इति एते स्वं यशः ख्यापयन्ते। वयमेव भूमिं धारयामः इति एते फणिप्रत्यादयः स्वीयां कीर्तिं प्रसारयन्ति। तदपि कथम्? निःशङ्कं निरपत्रपं च। प्रत्यक्षविरुद्धं कथं कथयेम इति शङ्कां परित्यज्य, लोका अस्मान् अनृतवादिन इति भावयेयुः इति

लज्जां विहाय च। यदेवमेते कुर्वन्ति, तदिदं नः कर्णशूलायते। तदिदमस्माकं कर्णे शूलमिव आचरति। कर्णयोः शूलप्रवेशे यादृशी यातना जायते, तादृशी एव जायते एतेषां निर्लज्जानां भाषणस्य श्रवणे—इत्यर्थः।

एवं सर्पराजादीनपदिश्य राज्ञः उद्दिशति। राजाधिराजाः सहस्रशः भूमौ जाताः। ते सर्वे तस्या गर्भे लीना अभूवन्। तान् सर्वान् भूमिरेव अधारयत्। तथापि ते आत्मनो महीपालान् भूमिभारधारकांश्च कीर्तयन्ति निर्लज्जम्। तादृशवाक्छ्रवणेन सतां कर्णवेदना समुत्पद्यत —इति।

उपदेशस्तु निर्लज्जैः नीचैः क्रियमाणा मिथ्यात्मप्रशंसा सतां कर्णं शूलमिव तुदतीति।

सर्वत्रान्यापदेशशतकेऽस्मिन् अप्रस्तुतप्रशंसा अलङ्कार। तत्र तत्रैषा व्याजस्तुत्यादिभिः संकीर्णा यथा निदर्शितं प्राक्।

ननु कथमत्र अप्रस्तुतप्रशंसा ?

"अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया" इति हि तस्या लक्षणम्। यदि कविः पुरस्तात् स्थितमेव वृक्षादिकमपदिश्य वदति, अप्रस्तुतस्य वर्णनमेव नास्ति खलु—इति चेत्, सत्यम्। अपदिश्यमानस्य प्रस्तुतत्वमप्रस्तुतत्वं वेति निर्णेतुं सदा प्रमाणानि न लभ्यन्ते।

यदि अपदिश्यमानस्यापि प्रस्तुतत्वं, तर्हि तत्र अप्रस्तुतप्रशंसा न भवति। तर्हि का गतिः? उच्यते। ध्वन्यालोकलोचनकारस्य अभिनवगुप्ताचार्यस्य मते अत्र ध्वनिः। तेन हि "अप्रस्तुतप्रशंसायां वाच्यार्थस्य अप्रस्तुतत्वात् अभिधा अपर्यवसिता प्रस्तुतमप्याक्षिपतीति प्रस्तुतार्थोऽपि तत्र अभिधाकुक्षावेव निपततीति कृत्वा अप्रस्तुतप्रशंसा अलङ्कारः। वाच्यार्थस्य तु प्रस्तुतत्वे अभिधा तत्रैव पर्यवस्यति, ततो प्रस्तुतान्तरं व्यञ्जनयैव लभ्यत इति असौ ध्वनिरेव"—इति व्युत्पाद्यते। कुवलयानन्दकारस्य तु मते वाच्यार्थस्य प्रस्तुतत्वे प्रस्तुताङ्कुरालङ्कारो भवति। "प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः" इति तल्लक्षणात्।

प्रस्तुतो नाम कविसंरम्भगोचरः, तस्मादन्यः, तस्य अपदेशः इति व्याख्याने तु अपदिश्यमानस्य प्रस्तुतेतरत्वनियमादप्रस्तुतप्रशंसैवेति भावयामः। अपदेशस्य व्यञ्जनया लभ्यत्वेऽपि, तावन्मात्रेण ध्वनित्वं न भवति, तस्य मुख्यचमत्कारकारणत्वाभावात्। एवं च एतादृशं काव्यं गुणीभूतव्यङ्ग्यान्तःपातीति अस्माकं भाति।

ननु केषुचिदत्र पद्येषु अर्थस्यासम्भवो दृश्यते। यथा "अस्यां प्रावृषि" (४२) इति पद्ये "अभ्र त्वया गम्यते" इति अचेतनं संबोध्य किञ्चिदुच्यते। को वा मतिमान्

अचेतनं बोधयितुं प्रयतेत ? इति चेत्, सत्यम्। भूषणमेतत् काव्यस्य, न तु दूषणम्। वाच्यार्थे कवेस्तात्पर्यं नास्ति, अपि तु उद्देशविषयीभूत एव इति हि एवं विस्पष्टं भवति। उक्तं च अलंकारसर्वस्वकारेण —
"अत्राचेतनेन सह प्रश्नोत्तरिका नोपपन्नेति वाच्यस्य असम्भव एव। प्रस्तुतं प्रति तात्पर्यात् प्रमुख एव तदध्यारोपेण प्रतीतिरिति युज्यत एवैतत्" इति।

इत्थं यत्र वाच्यार्थे नैयत्यं न भवति, तत्रापि ज्ञेयम्। यथा—"अहस्त्रिश्चतुरम्बुभिः स्नपयसि" इति पद्ये। गजो हि सदा मेध्यतराणि अश्वत्थपत्राण्येव न भुङ्क्ते। सदा पुण्यारण्यचर एव भवतीत्यपि नास्ति नियमः। तथापि उद्देश्यभूते व्यङ्ग्यार्थे अन्धश्रद्धाबद्धे साम्प्रदायिके तादृशोर्थः संजाघटीतीति न किञ्चिदसमञ्जसम् इत्यास्तां विस्तरः।

१०१

एवमन्यापदेशशतकं समापयन् भूमिदेवीस्तोत्ररूपं मङ्गलमाह—

भूतानां प्रभवस्थितिप्रविलयास्त्वय्येव विश्वंभरे !
त्वद्गर्भे ननु ते रसातलजुषो दैत्याः फणीन्द्राश्च ये।
त्वं सर्वैरुपजीव्यसे दिविचरैस्त्वत्तोऽपि किञ्चित्परं
न स्यात् स्यादपि तन्निरस्तविषयं ब्रह्म त्वमेवासि नः ॥

O mother earth, it is on you that all beings are born, live and perish. Even the demons and the serpents, who (are said to) dwell in the underworld, actually are in your womb. All the gods too depend on you for their life. There couldn't be anything greater than you. Or, if there is, it might be beyond our cognition. Therefore, from our point of view, you are the supreme Brahman.

हे विश्वंभरे, हे धरे! (धरा विश्वंभरा स्थिरा— इत्यमरः) त्वय्येव भूतानां प्रभवस्थितिप्रविलयाः। तवोपर्येव प्राणिनां जन्मस्थेमनाशाः, भवन्तीति शेषः। ये रसातल जुषः दैत्याः फणीन्द्राश्च, ते ननु त्वद्गर्भे। ये पाताल-वासिन इति प्रसिद्धाः राक्षसाः सर्पराजाश्च तेऽपि तवोदरान्तर्वर्तिन एव। त्वं सर्वैः दिविचरैः उपजीव्यसे। त्वामेव आश्रित्य सकला देवा जीवन्ति। भूमौ किलोत्पन्नैः घृतादिभिर्द्रव्यैः यज्ञेषु आचरितेषु देवानां तृप्तिः। त्वत्तोऽपि परं किञ्चित् न स्यात्। त्वदधिकं किमपि न विद्येत। तन्निरस्तविषयं स्यादपि। यदि विद्येत, तदस्मदगोचरं स्यात्। तस्मात्, त्वमेव नः ब्रह्मासि। त्वमेव परात्परं ध्येयं वस्त्वसि। दृश्यमानस्य अधस्तनस्य उपरितनस्य च लोकस्य सर्वेषामाधारो यस्मादसि,

तस्मात् त्वामेव ध्यायाम इति यावत् ।

एवं भूमिमपदिश्य महाकविः नीलकण्ठदीक्षितः स्वमातरं समुद्दिशति । नीलकण्ठस्य हि मातुर्नाम भूमिदेवी इत्येव । मातर्येव त्रयो लोकाः सन्ति यतः, ततः सैव पूज्या —इति

उपदेशस्तु न मातुः परदैवतम् —इति ।

श्रीमतो नीलकण्ठस्य नागराजेन धीमता ।
अन्यापदेशशतकं व्याख्यातं विदुषां मुदे ॥
तन्वा कण्ठं नैलकण्ठं नागराडिव नागराट् ।
काव्यं श्रीनीलकण्ठीयं व्याख्यया समभूषयत् ॥

इति श्रीभरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्धनिर्वाहकश्रीमहाव्रतयाजिश्रीमदप्पय्यदीक्षितसोदर्यश्रीमदच्चादीक्षितपौत्रेण श्रीनारायणदीक्षितात्मजेन श्री भूमिदेवीगर्भसम्भवेन श्री नीलकण्ठदीक्षितेन विरचितमन्यापदेशशतकम् ॥

श्रीकान्त पवर् प्रेस्, मैसूरु-४.

# शुद्धाशुद्धपत्रिका

| पुटः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 8 | 5-6 | प्राप्नवन्ति | प्राप्नुवन्ति |
| 11 | 6 | विघेः | विघेः |
| 11 | 9 | it | at |
| 17 | 9 | अभः | अम्भः |
| 48 | 4 | ह्यपभुञ्जते | ह्युपभुञ्जते |
| 166 | 15 | हरिणायेऽमी | हरिणा येऽमी |
| 168 | 15 | Hyeans | Hyenas |
| 173 | 10 | ज्ञानं | सदाचरणं |
| 177 | 14 | रसनाञ्चलो | रसनाञ्चले |
| 153 | 15 | परपीड | परपीडा |